श्रीः

पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीता

# विशिष्टाद्वैताधिकरणमाला



THE

# Vishistàdwaitàdhikaranamàla.

A WORK ON

VEDÁNTA PHILOSOPHY OF RÁMÁNUJA

COMPILED BY

PANDIT SUDARSHANÁCHÁRYA PUNJABI





BENARES.
AT THE TARA PRINTING WORKS,
1902.

श्रीः

# *Testimonials:*

## प्रशस्तिपत्रिका

पञ्चनदीयपण्डितवरसुदर्शनाचार्यप्रणीताऽद्वैतचन्द्रिका विशिष्टाद्वैताधिकरणमाला चेत्यभिनवं प्रबन्धद्वयमापाततो निरीक्ष्य भृशं प्रसीदन् विरलदर्शनदर्शनप्रचारेऽपीदृशे समये प्रणेतुर्दार्शनिकविषयव्युत्पत्तिपाटवं दुरुपपादविषयाणामपि सरलतरलेखेन स्फुटीकरण कौशलं चाभिनन्दन् विस्तृततमश्रीभाष्यसकलपर्यालोचनाऽक्षमाणामनेन प्रशंसनीयेन प्रयत्नेन परमोपकारमवधारयन् समालोचयन्तो नव्यनिबन्धरत्नद्वयं सूतेऽद्यापि पण्डितरत्नं रत्नगर्भेति निश्चिन्वन्तु विपश्चित्तमा इति संमन्यते—

(महामहोपाध्यायश्रीमत्पं०) गङ्गाधरशास्त्री

(श्रीमत्पं०) तैलङ्गरामशास्त्री च

(तात्याशास्त्रीत्यपरनामधेयश्रीमत्पं०) रामकृष्णशास्त्री च

(श्रीमत्पं०) नित्यानन्दशर्मा

(ओझा श्रीमत्पं०) श्रीसङ्गमलालशर्मा

(म० म० श्रीमत्पं०) सुब्रह्मण्यशास्त्री द्रविडः

(श्रीमत्पं०) त्र्यम्बकशास्त्री वैद्यः

(म० म० श्रीमत्पं०) सुधाकरद्विवेदी

(श्रीमत्पं०) सीतारामशास्त्री

---

श्रीहरिः शरणम् ।

पञ्चनददेशवास्तव्येन पण्डितश्रीसुदर्शनाचार्येणाऽद्वैतचन्द्रिकाविशिष्टाद्वैताधिकरणमाले प्राणायिषाताां ते इमेअवलोक्य सानन्दं ब्रूमहे यदसावधिगतव्युत्पत्तिरुत्साही सुलेखकः पटुर्विषयविवेचनशक्तिरिति—

(महामहोपाध्यायभट्टाचार्यश्रीमत्पं०) कैलासचन्द्रशर्मा

(म० म० श्रीमत्पं०) स्वामी रामभिश्रशास्त्री

॥ श्रीः ॥

# विशिष्टाद्वैताधिकरणमालाया विषयानुक्रमः

ऊर्ध्वपुण्ड्रबन्धः ।

श्रीश्रीसूतियतीन्द्रवन्दना ।

॥ श्रीः ॥

# विशिष्टाद्वैताधिकरणमालायाः शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १६ | चालय | चाक्षय |
| ६ | ६ | निर्वृन्तो | निर्वृतो |
| ६ | २५ | त्यादिकं | त्त्यादिकं |
| ७ | १ | मया | मयो |
| ७ | १३ | मभिधते | मभिधत्ते |
| ७ | १४ | कुत | कुतः |
| ११ | २ | व्युत्पत्या | व्युत्पत्त्या |
| ११ | ७ | पाधिका | पाधिकाः |
| १२ | १० | प्राण | प्राणः |
| १२ | २२ | वत्वं | वत्त्वं |
| १३ | ३ | पत्या | पत्त्या |
| १३ | ४ | पत्या | पत्त्या |
| १५ | ५ | स्पद | स्पदं |
| १५ | २६ | यनित्यं | यत्यं |
| १६ | १ | दृग्भ्या | दृग्भ्यां |
| १६ | २८ | प्रितिष्ठाम् | प्रतिष्ठाम् |
| १७ | ६ | प्रर्याय: | पर्यायः |
| १७ | २० | निष्फलं | निष्कलं |
| १८ | १३ | द्युक्षो | द्युक्षा |
| १९ | २२ | द्यौ | द्यौः |
| २१ | १३ | तदश्नाति | तदश्नाति |
| २२ | ११ | तुर्य | पञ्चम |
| २२ | ११ | शंव्यः | शव्यः |
| २२ | १८ | क्षण: | क्षणः |
| २४ | २० | तस्य चं | तस्य च |
| २५ | २० | वाद | वाद |
| २६ | २७ | सत्वे | सत्त्वे |
| २७ | १६ | वादराय- णिर्मृ | वादराय- णो मृ |
| २८ | १३ | जीवनानु | जीवनात्मनानु |
| ३० | ११ | व्रह्मात्मि | व्रह्मात्म |
| ३९ | ६ | माशङ्कच | माशङ्क्य |
| ४२ | १७ | श्रातिभ्यो | श्रुतिभ्यां |
| ४७ | १७ | न्हस्व | ह्रस्व |
| ४८ | ६ | स्पर्द | स्पन्दं |
| ४८ | ३० | समुदाय | समुदाय |
| ४८ | ३० | पञ्चमीन | पञ्चमिति |
| ४६ | १ | “अस्तति | असति |
| ४९ | १४ | संहितेश्च | संहतेश्च |
| ४९ | २२ | यमिमिति | यमिति |
| ५० | ५ | यतास्य | यतास्या— |
| ५० | २५ | वाह्मं | वाह्य |
| ५१ | ४ | पत्यधि | पत्त्यधि |
| ५१ | १० | मुत्पत्या | मुत्पत्त्या |
| ५२ | १९ | त्रिर्गस्या | निर्गतस्या |
| ५३ | १५ | पशुपत्तिः | पशुपतिः |

# शुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५३ | १८ | रस्यैर | रस्यैव |
| ५३ | २३ | मुत्पत्य | मुत्पत्त्य |
| ५३ | २४ | उत्पत्य | उत्पत्त्य |
| ५४ | १३ | नाऽविविज्ञा | नाऽविज्ञा |
| ५४ | १५ | स्वली | स्खली |
| ५७ | १२ | स्वीक्रिता | स्वीकृता |
| ६० | १२ | महत्वं | महत्त्वं |
| ६० | १६ | वीन्दु | विन्दु |
| ६३ | १२ | कृतं | ऋतं |
| ६४ | १२ | त्पत्यधि | त्पत्त्यधि |
| ६४ | २३ | द्रियाणां | न्द्रियाणां |
| ६५ | ४ | चेद्रियाणां | चेन्द्रियाणां |
| ६५ | १३ | मिद्रियाणां | मिन्द्रियाणां |
| ६६ | १० | पितर | पितरं |
| ६७ | १ | दुच्छास | दुच्छ्वास |
| ६७ | २३ | एभि" | एभिः" |
| ६८ | १२ | नेऽन्यास्या | नेऽन्यस्या |
| ६८ | १४ | यमानि | यनामानि |
| ६९ | ७ | ष्ठाधितृ | ष्ठातृ |
| ७२ | २ | वादरिः | वादरिः |
| ७२ | ६ | प्रयायिनां | प्रयायिणां |
| ७३ | १६ | श्रूयत | श्रूयते |
| ७४-७५ | | पृष्ठयोर्व्रीहिशब्दस्थाने व्रीहिशब्दो ज्ञेयः । | |
| ७५ | १६ | व्रीह्यादादि | व्रीह्यादि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७५ | २२ | सुगोभि | सुगोभिः |
| ७६ | ११ | वेशान्ताः | वेशन्ताः |
| ७६ | १४ | निर्दो | निर्दोप |
| ७६ | २१ | जिघित्सो | जिघत्सो |
| ८० | ७ | भावनेति | भावेनेति |
| ८३ | १५ | ष्विवै | ष्विवैँ |
| ८३ | २४ | रूपादिना | रूपादीन |
| ९४ | १५ | दन्तर | दनन्तर |
| ९६ | १५ | मतेम | मतेर्म |
| १०४ | ३ | जते | जाते |
| १०७ | ८ | श्रुतिना | श्रुतीना |
| १११ | १७ | पूर्व | पूर्वः |
| ११२ | ५ | ३८ | ३९ |
| ११५ | ६ | शमादयः श्रवणादयश्च | श्रवणादयः शमादयश्च |
| ११६ | २५ | असिनः | आसीनः |
| १२४ | २० | एवेति, | एवेति- |
| १२६ | ६ | च्छासी | च्छ्वासी |
| १३२ | ५ | छन्दोग्य | छान्दोग्य |
| १३३ | १ | स्वण्डे | खण्डे |
| १३४ | १ | स एक | स एव |
| १३६ | २ | सिद्ध | सिद्धम् |
| १४० | २२ | स्त्रीभिवा | स्त्रीभिर्वा |
| १४३ | १४ | संसारिक | सांसारिक |



श्रीः

* श्रियै नमः *

विशिष्टाद्वैततन्त्रार्थसौरभ्यभरभाविताम् ।

दृष्ट्वा मालामिमां ज्ञानां मदिष्यन्ति मनोऽलयः

## विज्ञप्तिः—

श्रीविशिष्टाद्वैतसंप्रदायार्थप्रबोधकश्रीश्रीभाष्यार्णवावगाहनेऽलसमतीनां तदधिकरणार्थसंवित्तिसंपत्तौ चासीमोत्सुकानां पुण्यभागधेयानामुपकाराय संकलितेयं श्रीविशिष्टाद्वैताधिकरणमाला मयेति मदीयाऽऽयासमवश्यं शङ्के कमनीयकुसुमं संपादयिष्यन्ति सन्तस्तत्रभवन्त इति संभावयति—

पञ्चनदीयः श्रीमदीयः
सुदर्शनाचार्यः ।



श्रीः

श्रीहरये नमः

। श्रीमते भगवद्रामानुजाचार्यमुनये नमः ।

# अथ विशिष्टाद्वैताधिकरणमाला

संसाराम्भोधिभङ्गैर्गतशिवविषये यातचेतःप्रवृत्तिं
जीवं ग्रीवानिधेयं मणिमिव विगुणव्यस्तहारप्रकीर्णम् ।
निक्त्वोन्नेतुं मुरारेः पदनलिनजलात् पञ्चवासास्तीशा
भूतग्रामेऽवतीर्णा जयति जननुता कापि कारुण्यमूर्तिः ॥१॥

भवाब्धिभयविह्वलाञ् जननयातनायन्त्रिताञ्
जनानवति यः सदा करुणमूर्तिरामानुजः ।
रमामतमहार्णवे वरदरक्तिरत्नाकरे
उपासनबृहत्तरेर्जयति कर्णधारो नवः ॥ २ ॥

(प्रथमं जिज्ञासाधिकरणम्)

"अथातो ब्रह्मजिज्ञासा १"

न ज्ञेयं ब्रह्म वा ज्ञेयं—सन्देहे समुपस्थिते ।
न ज्ञेयं पूर्वभागोक्तकर्मभिः सर्वलाभतः ॥
कर्मभिर्न हि मोक्षाप्तिः श्रूयते स्मर्यतेपि वा ।
तस्माज्ज्ञेयं परं ब्रह्म मोक्षप्राप्तिमनोरथैः, ॥
आनन्तर्यमथेत्युक्तमतो वृत्तस्य हेतुता ।
ज्ञातकर्मस्वरूपस्य जिज्ञासा ब्रह्मणि स्मृता ॥

नो यतो ब्रह्म भिद्येत विशेषणविभेदतः ॥
उपलक्ष्येत सृष्ट्यादेस्तज्जिज्ञासोपपत्तये ।
विशेषणोपसंहारोऽविरोधे न हि भेदकृत् ॥

इदमाम्नायते—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति । अत्रोक्तं जगत्सृष्ट्यादिकं हरेर्ब्रह्मण उपलक्षणमस्ति नवेति सन्देहः । किं प्राप्तम्? नेति यतो विशेषणानां सृष्ट्यादीनां भेदेन विशेष्यं ब्रह्म भिद्येत यथा नीलपीतादिविशेषणभेदेन घटो भिद्यते ।

अत्रोच्यते उपलक्ष्येतेति, जगत्सृष्ट्यादिकं ब्रह्मोपलक्षणमेव । नैरुपलक्षणीभूतैर्ब्रह्मण उपलक्षयितुं शक्यत्वात् । विशेषणानि परस्परं विरुद्धान्येव विशेष्यभेदमापादयन्ति यथा—नीलपीतादीनि यतो नीलघटः पीतो न भवति पीतघटो नीलो न भवतीति । यत्र हि नीलं गुरुं दृढं पृथुलं नवतरं घटमानयेत्युच्यते तत्र विशेषणभेदेपि विशेष्यभेदो न भवति तत्कस्य हेतोः? — विशेषणानां परस्परं विरोधाभावात् । एवं जगज्जन्मस्थितिभङ्गादयोपि कालभेदेन परस्परमविरुद्धा न ब्रह्मभेदमापादयन्ति किं त्वेकमेव ब्रह्मोपलक्षयन्ति । तदुक्तं श्रीमदाचार्यैः—"जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते" इति । किं वा "यतो वा इमानि" इत्यादि वाक्यं ब्रह्मणो लक्षणं नास्त्यथास्ति वेत्येवमधिकरणयोजना कर्तव्या । तथाहि—

यतो वेत्यादि वाक्यं नो लक्षणं वास्ति ब्रह्मणः ।
नो यतो ब्रह्मभिद्येत विशेषणविभेदतः ॥
उपलक्ष्येत तद्वाक्यात् तज्जिज्ञासोपपत्तये ।
विशेषणोपसंहारोऽविरोधे नहि भेदकृत् ॥

---

(तृतीयं शास्त्रयोनित्वाधिकरणम्)

ननु यदि ब्रह्मशास्त्रप्रमाणकं स्यात्तदा शास्त्रोक्तैः सृष्ट्यादिभिर्ब्रह्म प्रतिपत्तुं शक्येतापीत्याशङ्कां हृदि निधाय सूत्रयति—

"शास्त्रयोनित्वात् ३" इति ।

यतो वेत्यादिवाक्यं किं प्रमाणं वा न वा हरौ ।
न मानं ब्रह्मणस्तस्य प्रमाणान्तरलक्षणात् ॥
प्रमाणं शास्त्रमेवात्र भिन्नमानानिवेदनात् ।

परमात्मनि यतो वा इमानीत्यादिशास्त्रमप्रमाणं प्रमाणं वेति विशयः। किं युक्तम्? अप्रमाणमेवेति यतः–"अप्राप्ते शास्त्रमर्थवत्" इति न्यायेन ब्रह्मणः प्रमाणान्तरावेद्यत्वे हि तत्र शास्त्रं प्रमाणं स्यात् नैवमस्ति प्रमाणान्तरवेद्यत्वात् । यो हि शब्देन बोध्यते स प्रत्यक्षादिनापि प्रतिपत्तुं शक्यते यथा घटादिरिति प्राप्ते—

ब्रूमः प्रमाणमिति, शास्त्रमेव ब्रह्मणि प्रमाणं प्रत्यक्षाद्यविषयत्वात् । यदि प्रत्यक्षादिविषयः स्याद्ब्रह्म तर्हि तत्प्रतिपादनाय शास्त्रं नैवमायास्येत । श्रूयते च "तं त्वौपनिषदं पुरुषं पृच्छामि" इति । उपनिषन्मात्रगम्यस्यैवौपनिषदत्वं संभवति यदि ब्रह्म प्रत्यक्षादिवेद्यमपि स्यात्तदौपनिषदं पुरुषमिति नियोगो न संगच्छेत । तस्माच्छास्त्रमेव ब्रह्मणि प्रमाणमिति यतो वा इमानीत्यादिवाक्यजातं ब्रह्म बोधयत्येव ।

---

(चतुर्थं समन्वयाधिकरणम्)

ननु स्याच्छास्त्रप्रमाणकत्वं ब्रह्मणो यदि ब्रह्म कार्यं स्याच्छास्त्रस्य कार्यमात्रबोधकत्वात् सिद्धं ब्रह्म कथं बोध्येत शास्त्रेण तदुक्तम्–

" प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रं तूपपाद्यते" ॥ इति ।

इत्याशङ्क्य सूत्रयति–

"तत्तु समन्वयात् ४" इति ।

शास्त्रप्रमाणकत्वं तद्ब्रह्मणो नास्त्यथास्ति वा ।
नास्य कार्यपरत्वाद्धि, मैवमस्ति समन्वायात् ॥

ब्रह्मणः शास्त्रप्रमाणकत्वं नास्त्यस्तिवेति संशये नास्तीति युक्त-मुक्तयुक्तेरिति मा वोचः, यतः संभवत्येव शास्त्रप्रमाणकत्वं ब्रह्मणः समन्वयात् वेदान्तवाक्यानां तस्मिन् भगवति बोधकत्वेनान्वयात् । तुच्छतरमिदमुच्यते यद्ब्रह्म न बोधयति शास्त्रमिति । परमपुरुषार्थतया तत्प्रतिपादनाय प्रवृत्तं शास्त्रं तदेव कुतो न बोधयेत् । नरपतिदर्शनाय प्रवृत्तः पुरुषः पदातिदर्शनेनानुषङ्गिकेण निर्वृत्तो न नरपतिनिकटं निरन्तरायोऽपि प्रयातीति निदर्शनमनुहरति प्रभाकरप्रतिपादनम् ।

---

(पञ्चममक्षित्यधिकरणम्)

"ईक्षतेर्नाऽशब्दम् ५ गौणश्चेन्नात्मशब्दात् ६ तन्निष्ठस्य मोक्षोप-देशात् ७ हेयत्वावचनाच्च ८ प्रतिज्ञाविरोधात् ९ स्वाप्ययात् १० गतिसामान्यात् ११ श्रुतत्वाच्च १२"

सदेवेत्यादिवाक्येन प्रधानं प्रतिपाद्यते ।
किं वा ब्रह्म, प्रधानं भो—जगत्सारूप्यदर्शनात् ।
ईक्षत्यनुपपत्तेस्तु ब्रह्मैव प्रतिपाद्यते ॥

इदमाम्नायते—"सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम् । तदैक्षत बहुस्यां प्रजायेय ।" इति । अत्र सदादिशब्दैः किं प्रधानं परामृश्यते ब्रह्म वेति संदेहे प्रधानमेवेति युक्तम् । यतः सत्त्वरजस्त-मोमयस्य कार्यरूपस्य प्रपञ्चस्य सत्त्वरजस्तमसां साम्यावस्थालक्षणं प्रधानमेव कारणं युक्तं कार्यकारणयोः सारूप्यदर्शनात् सदादिश-ब्देश्चात्रजगत्कारणमेव परामृश्यते । कथं च चेतनं ब्रह्म गुणत्रयादस्पृष्टं जडस्य गुणत्रयमयस्य कार्यस्य जगतः कारणं स्यादिति विपक्षे बाधकाच्च ।

अत्रोच्यते सदादिशब्दैः जगत्कारणत्वेन ब्रह्मैव प्रतिपाद्यते चे-तने ब्रह्मण्येवेक्षतेरुपपत्तेः । प्रधानेऽचेतन ईक्षतेरनुपपत्तेश्च । संभवति च तस्मात्परस्माद्ब्रह्मण ईदृशप्रपञ्चस्योत्पत्त्यादिकं "परास्य शक्ति-र्विविधैव श्रूयते" इत्यादिश्रुतेः ।

( षष्ठमानन्दमयाधिकरणम् )

"आनन्दमयाभ्यासात् १३ विकारशब्दान्नेति चेन्न प्राचुर्यात् १४ तद्धेतुव्यपदेशात १५ मान्त्रवर्णिकमेव च गीयते १६ नेतरोऽनुपपत्तेः १७ भेदव्यपदेशाच्च १८ कामाच्च नानुमानापेक्षा १९ अस्मिन्नस्य च तद्योगं शास्ति २०" ॥

आनन्दमयवाक्ये किं जीवो वा ब्रह्म वोच्यते ।
शारीरत्वश्रुतेर्जीवो, ब्रह्मैवाभ्यासतः परम् ॥

इदं श्रूयते—"तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मा आनन्दमयः" इति । तत्र संदेहः किमत्रानन्दमयपदं जीवमभिधत्ते किं वा परं ब्रह्मेति । जीवमिति युक्तं यतः—आन्दमयमुपक्रम्य "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इति श्रूयते तस्य पूर्वस्य विज्ञानमयकोशस्यैष एवानन्दमय आत्मेत्यर्थः, विज्ञानमय इति स्वार्थिकमयटा बुद्धिमात्रमुच्यते तस्यात्मा जीव एव भवितुमर्हतीति जीवमेवानन्दमयपदमभिधत्ते । शारीर इति शरीरसम्बन्धी जीवात्मैवोच्यते । इति प्राप्ते—

ब्रूमो—ब्रह्मवेति ब्रह्मैवानन्दमयपदेनाभिधीयते कुत—अभ्यासात् । अयं भावस्तैत्तरीयोपनिषद्यानन्दवल्ल्यामष्टमेऽनुवाके "सैषानन्दस्य मीमांसा भवति साधुयुवास्यात्साधुयुवा ऽध्यापकः" इत्यारभ्य "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य स यश्चायं पुरुषे यश्चासावादित्ये स एकः" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" इत्येवमन्तेन वाक्यनिकरेण प्रतिपाद्यमान आनन्दो न जीवे दुःखप्रधाने सम्भवतीति प्रतिपादितानन्दस्य परमात्मैवाश्रयः । विज्ञानमयपदेन च न बुद्धिमात्रं प्रतिपाद्यते किं तु तदाश्रयो जीव एव जीवस्य विज्ञानप्रधानत्वयुक्तत्वात् । जीवादान्तरस्तु परमात्मैव "स यश्चायं पुरुषे यश्चासावादित्ये" इति श्रवणात् । तस्मात्परमात्मैवानन्दमयः । मयट् प्राचुर्यार्थत्वात् प्राणमयादौ तु प्राणादीनां प्राणाद्याश्रयत्वासम्भवात् स्वार्थिको मयडगत्या स्वीक्रियते । किं वा प्राणमयादावपि प्राचुर्यार्थे एव मयड् ज्ञेयो न विकारार्थः । अन्नमयमात्रे एव विकारार्थत्वस्य युक्तत्वात् ॥

( सप्तममन्तरादित्याधिकरणम् )

"अन्तस्तद्धर्मोपदेशात् २१ भेदव्यपदेशाच्चान्यः २२"

य एषोन्तरादित्ये—य एषोन्तराक्षिणि च तथा वाक्ये ।
पुरुषपदं किं जीवं किं वा ब्रह्माभिधत्ते तत् ॥
जीवं तनुसम्बन्धात्, तद्धर्मोपदेशात्तु कृष्णं वै ।

इदमाम्नायते—"अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" तथा "य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद् यजुस्तद्ब्रह्म" इत्यादि । अत्र किं पुरुषपदं जीवात्मानं प्रतिपादयति किं वा परमात्मानमिति संशयः । किं प्राप्तम् ? जीवात्मानमिति कुतः ? शरीरसम्बन्धात् हिरण्यश्मश्रुरित्यादिना शरीरसम्बन्धप्रतीतेर्न हि परमात्मनः शरीरसम्बन्धो युक्ततरः । इतिप्राप्ते–

अभिधीयते तद्धर्मोपदेशात्तु कृष्णं वै, इति । अत्रत्यं पुरुषपदं कृष्णं परमात्मानमेवाभिधत्ते तद्धर्मोपदेशात् । उक्तं पुरुषपदप्रतिपाद्यमधिकृत्यापहतपाप्मत्वादीनां परमात्मधर्माणामुपदेशात् । यथा—"स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" तथा "सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म" इति । तस्मात्परमात्मैवात्राभिधीयते पुरुषपदेन ॥

---

( अष्टममाकाशाधिकरणम् )

"आकाशस्तल्लिङ्गात् २३"

अस्य लोकस्य केत्यादावाकाशं ब्रह्म वोच्यते ।
आकाशं शब्दसामर्थ्याल्लिङ्गसामर्थ्यतः परम् ॥

इदमाम्नायते—"अस्य लोकस्य कागतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यान्ति" इत्यादि । अत्राकाशपदेन भूताकाशमुच्यते परं ब्रह्म वा किं युक्तं भूताकाशमिति कुतः ? शब्दसामर्थ्यात् । आकाशपदं हि विद्वांसो भूताकाश एव प्रयुञ्जते । इत्येवं प्राप्ते–

अभिधीयते—आकाशपदेन ब्रह्मोच्यते तल्लिङ्गात् तस्य ब्रह्मणो लिङ्गात्। यदत्र जगज्जन्मादिकारणत्वमुक्तं तद्भूताकाशे न समन्वेतीति जगज्जन्मादिकारणमाकाशपदवाच्यं ब्रह्मैव परं ज्ञेयमित्यर्थः ॥

---

( नवम प्राणाधिकरणम् )

"अत एव प्राणः २४"

भूतानि प्राणमित्यत्र प्राणशब्देन किं मतम् ? ।
प्राणवायुर्यतो लोकः प्राणाधीनस्थितिर्मतः ॥
मैवं पूर्ववदत्रापि प्राज्ञ एवाभिधीयते ॥

इदं श्रूयते—"कतमा सा देवता ? प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति । अत्र प्राणशब्देन किं प्राणवायुरभिधीयते किं वा परमात्मेति सन्देहे प्राणवायुरेवाभिधीयते यतो जीवानां प्राणाधीनस्थितेः प्राणस्यापि भूतकारणत्वं सम्भवति । प्रसिद्धेश्च-प्रसिद्धिरपि प्राणशब्दस्य प्राणवायावेवेति प्राप्ते—

अभिधीयते मैवमिति, प्राणशब्देन परमात्मैवाभिधीयते जीवानां प्राणाधीनस्थितिसत्त्वेपि न सर्वेषां भूतानां प्राणाधीनस्थितिरस्ति प्राणसम्बन्धस्याव्याप्यवृत्तित्वात् । किं तु सकलभूतानां परमात्माधीनैवस्थितिरिति प्राणशब्देनात्र परमात्मैवाभिधीयते ॥

---

( दशमं ज्योतिरधिकरणम् )

"ज्योतिश्चरणाभिधानात् २५ छन्दोभिधानान्नेति चेन्न तथाचेतोर्पणनिगदात्तथा हि दर्शनम् २६ भूतादिपादव्यपदेशोपपत्तेश्चैवम् २७ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् २८"

अतः परो दिवोज्योतिर्वाक्ये ज्योतिःपदार्थः कः ।
आदित्यादिः प्रसिद्धेर्नो—पादस्येत्यादितः परः ॥
गायत्र्यादिकशब्दानामेवं ब्रह्मणि शक्तता ॥

इदमाम्नायते–"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति तत्र सन्दिह्यते ज्योतिष्पदार्थः किमादित्यादिः किं वा परमकारणभूतं ब्रह्मेति। तत्र ज्योतिष्पदं लोके द्युमण्यादावेवप्रसिद्धमिति परमात्मलिङ्गविशेषानुपलब्धिश्चेति हेतोर्ज्योतिष्पदार्थ आदित्यादिरेव।

तत्रोच्यते–'नो पादस्येत्यादितः परम्' इति। दिवोज्योतिरिति द्युसम्बन्धितया निर्दिष्टो ज्योतिष्पदार्थः परः परमात्मैव यतः–"पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यादिना ज्योतिष्पदार्थस्य पादत्वेन सर्वभूतान्यभिधीयन्ते सर्वभूतानां पादत्वं च परमात्मनिरूपितमेव सम्भवति नादित्यादिनिरूपितमिति ज्योतिष्पदार्थः परमात्मैव॥

जाठरज्योतिषैक्योपदेशोपि न विरुद्धः "अहं वैश्वनरो भूत्वा प्राणिनां देहमाश्रितः" इत्यादिवचनबलात्तस्योपदेशस्यानुसन्धानविधायकत्वात्। एवं "गायत्री वा इदं सर्वम्" इत्यादौ गायत्रीच्छन्दोविशेषस्य सर्वात्मकत्वासम्भवात् गायत्रीपदवाच्यमपि परं ब्रह्मैवेति विज्ञेयम्॥

---

(एकादशमिन्द्रप्राणाधिकरणम्)

"प्राणस्तथानुगमात् २९ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ३० शास्त्रदृष्ट्या तूपदेशो वामदेववत् ३१ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह च तद्योगात् ३२"

प्रतर्दनो ह वै वाक्याज्ज्ञेयो जीवोथ वा परः।
जीवः शब्दप्रसिद्धेः स्यादजरत्वादिना परः॥

इदमाम्नायते–"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य–दैवोदासिं प्रति "वरं वृणीष्व" इतीन्द्रेणोक्ते दैवोदासिरुवाच"त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति,ततश्चेन्द्रेणोक्तम्–"प्राणोस्मि प्रज्ञात्मा

ते मामायुरमृतमित्युपास्स्व" इति । अत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवो वा परमात्मा वेति सन्देहः । तत्र शब्दव्युत्पत्त्या इन्द्रप्राणशब्दाभ्यामिन्द्र-समाख्यो जीव एव ज्ञेयः । इन्द्रशब्दस्तु जीवविशेष प्रसिद्ध एव तत्सा-मानाधिकरण्यात् प्राणशब्दोपि तस्यैवाभिधायको ज्ञेयः । इति प्राप्ते-

ब्रूमः—अजरत्वादिना पर इति । "स एव प्राण एव प्रज्ञात्माऽऽ-नन्दोऽजरोऽमृतः" इत्यादाविन्द्रप्राणशब्दाभ्यां निर्दिष्टस्यानन्दाजर-त्वादयो धर्माः श्रूयन्ते ते च निरुपाधिका परमात्मन्येव सम्भवन्ति न जीव इतीन्द्रप्राणशब्दाभ्यां परमात्मैवात्र ज्ञेयो न जीव इति सिद्धम् । यथा हि वामदेवेन "अहं मनुरभवं सूर्यश्च" इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्योक्तो मन्वादिभावस्तथेन्द्रेणापि स्वात्मशरीरकं परं ब्रह्मैव निर्दिश्योक्तं "प्राणोऽस्मि प्रज्ञात्मा" इत्यादि । तस्मात्सर्वासां श्रुतीनां तस्मिन् भगवति परमात्मन्येव समन्वय इति सर्वमवदातम् ॥

॥ इति प्रथमः पादः समाप्तः ॥



## अथ द्वितीयः पादः ।

( प्रथम सर्वत्र प्रसिद्ध्याधिकरणम् )

"सर्वत्र प्रसिद्धोपदेशात् १ विवक्षितगुणोपपत्तेश्च २ अनुपपत्तेस्तु न शारीरः ३ कर्मकर्तृव्यपदेशाच्च ४ शब्दविशेषात् ५ स्मृतेश्च ६ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्यो-मवच्च ७ सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ८ ।"

यथाक्रतुश्रुतौ जीवो ब्रह्म वा प्रतिपाद्यते ।
मनःप्राणान्वयाज्जीवो, नो—ब्रह्मैव प्रसिद्धितः ॥

इदमाम्नायते—"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणश-रीरो भारूपः" इत्यादि । अत्र क्रतुपदाभिलप्यस्योपासनस्योपास्यो मनोमयः प्राणशरीरो भारूप इति निर्दिश्यते तथा च मनोमयत्वादि-गुणकः किं जीव उपास्यतया निर्दिश्यते किं वा परमात्मेति—विचि-

किन्सा प्राप्ता। किं युक्तमङ्ग ? जीव इति यतो मनःप्राणयोर्जीवोपका-रकत्वाद् मनोमयत्वादिर्गुणो जीवे एवो पपद्यते न परमात्मनि "अप्राणो ह्यमनाः" इति प्रतिषेधात्। स्ववाक्यस्थमनोमयगुणकस्य चो पास्यस्योपलब्धिराकाङ्क्षैव वाक्यस्योपास्यविषयिका नास्ति येन वा-क्यान्तरादत्र ब्रह्म प्राप्येत। इति प्राप्ते—

ब्रूमः—नो ब्रह्मैवेति। यदुक्तं जीवएवोपास्यत्वेन निर्दिश्यते तन्न युक्तं यतो ब्रह्मैवात्रोपास्यत्वेनोच्यते। सकलवेदान्तवाक्येषु प्रसि-द्धमस्ति मनोमयत्वादिगुणवत्त्वं परमात्मनस्तथाहि-"मनोमयः प्राण-शरीरनेता स एषोन्तर्हृदयाकाशस्तस्मिन्नयं पुरुषो मनोमयः, न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन, प्राणस्य प्राण" इति। मनोमयत्वं = विशुद्धमनसा ग्राह्यत्वम्। प्राणशरीरत्वं = प्राणस्याप्या धारत्वं नियन्तृत्वं च॥

श्रुत्यन्तरेणाधिकरणं योजयति—

सर्वं खल्विति वाक्ये किं जीवो वा ब्रह्म वोच्यते।
सर्वभावास्पदो जीवो, नो—ब्रह्मैव प्रसिद्धितः॥

इदमाम्नायते-"सर्वं खल्विदं ब्रह्म तज्जलानि शान्त उपासीत" इति। अस्यैव वाक्यस्य गुणोपादानार्थोनुवादः—"स क्रतुं कुर्वीत मनोमनः प्राणशरीरो भारूपः" इति। उपादेयाश्च गुणा मनोमयत्वा-दयः। तत्र विशयः किं मनोमयत्वादिगुणान्वितो जीव एवोउपास्य-त्वेनोच्यते किं वा परमात्मेति। तत्रोच्यते 'सर्व भावास्पदो जीवः' इति। सर्वं खल्विदमित्यत्र सर्वभावास्पदत्वं = चतुर्मुखादिस्तम्बपर्य-न्तावस्थावत्त्वं जीवस्यैवोपपद्यते न किल परमात्मनोऽपहतपाप्मन इति सर्वपदसमानाधिकरणं ब्रह्मपदं जीवपरमेवेतिविज्ञायते। जीवस्यापि "स चानन्त्याय कल्पते" इत्यादिश्रुतेर्ब्रह्मत्वमुपपद्यत एवेति प्राप्ते—

अभिधीयते 'नो ब्रह्मैव प्रसिद्धितः' इति। सर्वं खल्वितिवाक्येनो-पास्यतया ब्रह्मैव निर्दिश्यते। कुतः ? प्रसिद्धोपदेशात्—सर्वं खल्विदं ब्रह्मेति प्रसिद्धवदुपदेशात्। तज्जत्वात् तल्लीनत्वात् तदनत्वात् प्रप-ञ्चस्य सर्ववेदान्तेषूपास्यतया परमात्मैवोपदिश्यते—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। तस्मात् सर्वप्रकारं सर्वशरीरं स-

र्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परमात्मनः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशतीत्युक्तश्रुतितात्पर्यभूमिः परं ब्रह्मैव न जीव इति सिद्धम् । विवक्षितगुणोपपत्त्यादेश्च परमात्मैवायम् । अनुपपत्त्यादिभिश्च न जीवः । ननु "एष मे आत्मान्तर्हृदये" इत्यादिनोक्तश्रुतितात्पर्यभूमेरणीयस्त्वं प्रतीयते तच्च जीवधर्म एव न परमात्मधर्मस्तस्य व्यापकत्वादिति जीव एवोक्ताधिकरणार्थोपसंहारास्पदो भवत्विति चेन्न, उपासनाविशेषप्रतिपादनाय परमात्मैवाणीयस्त्वेन व्यपदिश्यते इत्यर्थः ॥

---

( द्वितीयमत्रऽधिकरणम् )

"अत्ता चराचरग्रहणात् ९ प्रकरणाच्च १० गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ११ विशेषणाच्च २२"

ब्रह्मक्षत्रौदने वाक्ये जीवोऽत्ता किमु वा हरिः ।
कर्महेतुकभोक्तृत्वं जीवे सम्भवतीति सः ।
सर्वप्रपञ्चभोक्तृत्वप्रतीतेर्हरिरेव सः ॥

इदमाम्नायते—" यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनो मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति । यस्य परमात्मनो ब्रह्म क्षत्रमोदनं = भक्षणद्रव्यं यस्य मृत्युरुपसेचनं = ब्रह्मक्षत्रलक्षणोदनाऽदनोपकरणं यथा मनुष्याणां द्विदलाशाकादि स परमात्मा यत्र यस्मिन् प्रकारे, इत्था—इदंप्रकारविशिष्टश्चेति को वेदेत्यर्थः । यद्यपि परमात्मनः सकलप्रपञ्च एवोदनं न ब्रह्मक्षत्रमात्रं तथापि प्राधान्येन निर्देशः प्रपञ्चे ब्रह्मक्षत्रयोरेव प्राधान्यात् । यद्यप्युक्तश्रुतौ साक्षादत्तृपदं नास्ति तथापि यस्यौदनं भवति सोऽत्ता भवत्येवेत्यत्तृत्वे विचिकित्सा—किं जीवोऽत्ता किं वा हरिः परमात्माऽत्तेति । जीवोऽत्तेत्येव युक्तं, अत्तृत्वं हि भोक्तृत्वं तच्च कर्मसम्बन्धं विना न सम्भवति कर्मसम्बन्धश्च जीव एवोपपद्यते नो परमात्मनीति जीव एवात्तेति प्राप्ते—

ब्रूमः—'सर्वप्रपञ्च' इति । चराचरग्रहणात् सकलप्रपञ्चभोक्तृत्वात् परमात्मैवात्रात्ता । सकलप्रपञ्चभोक्तृत्वं हि सकलप्रपञ्चसंहर्तृत्वं तच्च न लेशतोपि जीव उपपद्यत इति प्रकरणादिभिश्चात्रात्ता परमात्मैवेत्यर्थः ॥

( तृतीयमन्तराधिकरणम् )

"अन्तर उपपत्तेः १३ स्थानादिव्यपदेशाच्च १४ सुखविशिष्टाभि-
धानादेव च १५ अत एव च स ब्रह्म १६ श्रुतोपनिषत्कग-
त्यभिधानाच्च १७ अनवस्थितेरसम्भवाच्च नेतरः १८"

य एषोक्षिणिवाक्ये यः पुरुषः प्रतिपाद्यते ।
प्रतिबिम्बः स वा चक्षुरधिष्ठाताथ वा मतः ॥
जीवो वा परमात्मा वा विचिकित्साविधभेदतः ।
पूर्वः प्रसिद्धनिर्देशादधिष्ठाता तदाश्रयात् ॥
सन्निधानप्रसिद्धेः स्याज्जीवस्तत्रोच्यते परः ।
एष आत्मेतिवाक्योक्तार्थस्य तत्रैव सम्भवात् ॥

इदमामनन्ति छन्दोगाः—"य एषोऽक्षिणि पुरुषो दृश्यते एष आ-त्मेति होवाच, एतदमृतमेतदभयमेतद् ब्रह्म" इति । तत्र चतुर्धा वि-चिकित्सा सम्भवति—योयमक्षिपुरुषो निर्दिष्टः स किं प्रसिद्धः प्रति-बिम्बात्मैव किं वा चक्षुरधिष्ठाता देवताविशेष आहोस्विज्जीवात्मा-थवा परमात्मेति । अत्रोच्यते 'पूर्वः प्रसिद्धनिर्देशात्' इति, अक्षिपु-रुषत्वेन निर्दिष्टः पूर्वः-प्रतिबिम्ब एव य एषोक्षिणीति प्रसिद्धवन्निर्दे-शात् । अक्षिणि प्रतिबिम्बस्योपलम्भाच्च । किं वा आत्मेति हो वाचे-तिश्रुत्यात्मत्वमाक्षिपुरुषस्योच्यते आत्मत्वं च चेतनत्वमिति जडस्य प्रतिबिम्बस्यात्मत्वं नोपपद्यत इत्यक्षिपुरुषश्चक्षुरधिष्ठाता देवता-विशेष एव तस्य चेतनत्वादात्मत्वोपपत्तेः । किं च तदाश्रयात्—चक्षुर-धिष्ठातृदेवता चक्षुष्येव निवसतीति "य एषोक्षिणि" इति वाक्येन सैव पुरुषत्वेनोपदिश्यते श्रुतिरप्याह—"रश्मिभिरेषोस्मिन् प्रतिष्ठि-तः" इति । एवमपि सन्तुष्टिर्नास्ति, यतः—कृतं शारीरकशास्त्रे चक्षु-रधिष्ठातृदेवताप्रतिपादनेन तस्मादक्षिपुरुषोत्र क्षेत्रज्ञ एव ज्ञेयस्तदाह 'सन्निधानप्रसिद्धेः' इति । जीवात्मनोपि क्षेत्रज्ञस्य चक्षुषि विशेषेण सन्निधानप्रसिद्धिरस्ति चक्षुरुन्मीलनादिना क्षेत्रज्ञानुमानप्रसरात् । इत्येवं त्रिधा पूर्वपक्षे प्राप्ते—

उच्यते 'तत्रोच्यते परः' इति । परः-परमात्मैवाक्षिपुरुषत्वेनात्र वाक्ये निर्दिश्यते । कस्मादूभो ? इत्याह 'एष आत्मेति' इति । एष आत्मेति होवाच एतदमृतमेतदभयमित्यादिनोच्यमानामृतत्वादिगुणस्य वाक्यार्थस्य तत्रैव-परमात्मन्येव सम्भवात् । अन्यदपि परमात्ममात्रसंम्भावनास्पदं गुणजातमाह श्रुतिः-"एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनीरेष हि सर्वाणि वामानि नयति एष उ एवभामनीरेष हि सर्वेषु लोकेषु भाति" इति । वामानि-शरीराणि एतं-परमात्मानमभिसंयन्ति-अनुयान्तीति संयद्वामत्वं परमात्मन उच्यते । एवं वामनीत्वं भामनीत्वं च ज्ञेयम् । सयद्वामत्वादिकमन्यत्र नोपपद्यत इत्युक्तश्रुतितात्पर्यभूमिः परमात्मैव । "यश्चक्षुषि तिष्ठन्" इत्यादिस्थानादिव्यपदेशोपि चक्षुरधिकरणकोपासनोपलब्धये परमात्मप्रतिपादनेनुकूल एव परमात्मन एव चक्षुषि स्थितिनियमनादिकस्योपपत्तेरित्यादि विज्ञेयम् ॥

---

(चतुर्थमन्तर्याम्यधिकरणम्)

"अन्तर्याम्यधिदैवाधिलोकेषु तद्धर्मव्यपदेशात् १९ न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च २० उभयेपि हि भेदेनैनमधीयते २१"

**अन्तर्यामिश्रुतौ जीवः परमात्माथ वा मतः ।**
**वाक्यशेषाश्रयाज्जीवः परस्तद्धर्मपाठतः ॥**

इदं श्रूयते-"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष ते आत्मान्तर्याम्यमृतः" इति । तथा-"य आदित्ये तिष्ठन् आदित्यादन्तरो, य आत्मनि तिष्ठन्नात्मनोन्तरो, यः सर्वेषु लोकेषु तिष्ठन् सर्वेषु वेदेषु" इति । अत्र विशयः-किमयमन्तर्यामित्वेन निर्दिष्टः प्रत्यगात्मा किं वा परमात्मेति । किं युक्तं जीवः-प्रत्यगात्मैवेति यतो वाक्यशेषे-"यो रेतसि तिष्ठन् रेतसोन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोन्तरो यमयतित्येष ते आत्मान्तर्याम्यमृतः, अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योतोस्ति मन्ता नान्योतोस्ति विज्ञाता एष ते आत्मान्तर्याम्यमृतोऽतोन्यदार्त्तं ततो होद्दालक आरु-

णिरुपरराम" इति वा जसनेयिनः करणायत्तज्ञानतां पठन्ति दृग्भ्या पश्यन्नेव द्रष्टेत्युच्यते करणायत्तज्ञानवत्त्वं च प्रत्यगात्मन एव लिङ्गमिति प्रत्यगात्मा-जीवएवान्तर्यामी।

अत्रोच्यते–'परस्तद्धर्मपाठतः' इति। परः परमात्मैवोक्तश्रुतावन्तर्यामित्वेन श्रूयते तद्धर्मपाठतः-तद्धर्मव्यपदेशात्-तत्र तस्य परमात्मनो धर्माणां व्यपदेशात्। सर्वलोकनियमनादिर्धर्मः परमात्मन्येवोपपद्यते। किं चोक्तमन्तर्यामिणमधिकृत्य "य आत्मनि तिष्ठन्नात्मनोन्तरः" इत्यादि पठन्ति न हि प्रत्यगात्मन एव प्रत्यगात्मान्तरत्वमुपपद्यते तस्मादन्तर्यामी परमात्मैव श्रीनिवासः॥

---

(पञ्चमदृश्यत्वाद्यधिकरणम्)

"अदृश्यत्वादिगुणको धर्मोक्तेः २२ विशेषभेदाभ्यां च नेतरौ २३ रूपोपन्यासाच्च २४"

अथ परा यया वाक्ये प्रधानं प्राज्ञ एव वा।
अदृश्यत्वादिभिः पूर्वः सर्वज्ञत्वादिभिः परः॥

इदमाम्नायते–"अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः, यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति यथा सतः पुरुषात् केशलोमानि तथाक्षरात् संभवतीह विश्वम्, तपसा चीयते ब्रह्म ततोन्नमभिजायते अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्। यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति। अत्राक्षरशब्दः किं प्रधानपरः किं वा परमात्मपर इति विचिकित्सास्ति। तत्र प्रधानपर इत्येव युक्तं यतोऽदृश्यत्वादिगुणैर्विश्वयोनित्वादिभिश्च प्रधानमेव प्रत्यभिज्ञायते। इत्येवं प्राप्ते–

अभिधीयते–अक्षरशब्दोत्र परमात्मपर एव वाक्यशेषेऽक्षरशब्दवाच्यस्य सर्वज्ञत्वादिकमुच्यते नह्यचेतनस्य प्रधानस्याल्पज्ञत्वमप्युपपद्यते किमिति सर्वज्ञत्वं, तस्मादत्राक्षरशब्देन श्रुत्या परमात्मैव प्रतिपाद्यते। उपक्रमेपि "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्" इत्यादिना प्रकरणस्य परमात्मपरत्वमेव विज्ञायते।

तथा—

समष्टिपुरुषः प्राज्ञो वाक्षरात्परतः परः ।
प्रधानाश्रयणात् पूर्वः प्राज्ञलिङ्गात् स एव सः ॥

प्रथममुण्डकप्रथमखण्डोक्तनिर्दिष्टवाक्यादनन्तरं द्वितीयमुण्डकप्रथमखण्डे श्रूयते "दिव्योह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" इति । तत्र संदिह्यते किमत्र परपदेन समष्टिपुरुषो हिरण्यगर्भ उच्यते किं वा प्राज्ञः परमात्मेति । किं युक्तम्? पूर्वपक्ष एवेति, यतोऽक्षरात्परतः पर इत्यत्राक्षरात्परत इति समानधिकरणाभ्यां पदाभ्यां प्रधानमुच्यते क्षरणराहित्यादक्षरमिति प्रधानपर्यायः, परत इत्यनेन तस्य विकारजातात् परत्वमुच्यते, तदुक्तं श्रीमदाचार्यैः "सर्वस्माद् विकारात्परभूतादक्षरादस्मात् परः" इति पूर्वपक्षतया । प्रधानाच्च परत्वं समष्टिपुरुषस्य युक्तमेव यतः समष्टिपुरुषेणाधिष्ठितमेव प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूते समष्टिपुरुषाधीनत्वादिति यावत् तस्मादत्र परपदवाच्यो हिरण्यगर्भ एव ।

अत्रोच्यते 'प्राज्ञलिङ्गात् स एव सः' इति । प्राज्ञस्य परमात्मनो लिङ्गानां सर्वज्ञत्वादीनामुपलब्धेः सः—अक्षरात्परतः पर स एव-प्राज्ञ एवेत्यर्थः । तथाचाक्षरात्परतः परं पुरुषं प्रकृत्य श्रावयन्ति—' यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्माप्रतिष्ठितः" इति सर्वज्ञत्वादिकं ब्रह्मपुरे प्रतिष्ठितत्वं च परमात्मन्येवोपपद्यते । तथा "हिरण्मये परे कोशे विरजं ब्रह्म निष्फलं तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः" इति विरजत्वं निष्कलत्वं च परमात्मन्येवोपपद्यते । तथा "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इत्यादिना तत्प्रकरणेन परमात्मैव प्रतिपाद्यते इति ज्ञायते । किं चोपक्रमोपसंहारसाहाय्यमृतेऽपि "दिव्यो ह्यमूर्तः" इति वाक्यं परमात्मानमेव प्रतिपादयति 'अप्राणो ह्यमनाः' इति पाठात् । समष्टिपुरुषो जीव एव जीवत्वप्रयोजकं च प्राणधारणत्वमेव जीव प्राणधारण इति धातोरित्यप्राणत्वममनस्त्वं च समष्टिपुरुषप्रातिकूलं परमात्मानमेव स्ववाक्यैदंपर्यास्पदत्वेन प्रतिपादयतीति सिद्धम् ॥

( षष्ठं वैश्वानराधिकरणम्. )

“वैश्वानरः साधारणशब्दविशेषात् २५ स्मर्यमाणमनुमानं स्यादिति २६ शब्दादिभ्योन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते २७ अत एव न देवताभूतं च २८ साक्षादप्यविरोधं जैमिनिः २९ अभिव्यक्तेरित्याश्मरथ्यः ३० अनुस्मृतेर्बादरिः ३१ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ३२ आमनन्ति चैनमस्मिन् ३३”

वैश्वानरीयवाक्येषु निश्चयो ना,ऽस्ति वा परे।
नो वैश्वानरशब्दस्य बहुष्वर्थेषु पाठतः।
मैवं वैश्वानरो ब्रह्म तदनन्यविशेषणात् ॥

छान्दोग्यस्य पञ्चमप्रपाठक इदमाम्नायते “प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते है ते (पञ्च) महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ते ह सम्पादयां चक्रुरुद्दालको वै भगवन्तोयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामेति तं हाभ्याजग्मुः” इत्यारभ्य—“ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेदात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति” उपसंहारे च “तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति” इति।

अत्र सन्दिह्यते—किमत्रपरमात्मविषयको निश्चयो नास्ति किं वास्तीति। नास्तीत्येवयुक्तं वैश्वानरशब्दस्य चतुष्वर्थेषु प्रयोगदर्शनात्। तत्र जाठराग्नौ यथा—“अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते” इति। महाभूते तेजसि यथा—“विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमन्हामकृण्वन्” इति। देवतायां यथा—“वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः” इति। पर-

मात्मनि यथा–"तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत् स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत" इति। यदेवं वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगो दृश्यते तत्कथमत्र परमात्मैवोपक्रान्तो वैश्वानरशब्देनेति निश्चयः स्यात्?। उपक्रमाद्युक्तलिङ्गानां सर्वत्रैवान्वेतुं शक्यत्वाच्च।

अत्रोच्यते मैव मिति, वैश्वनरो ब्रह्मैव कुतः? तदनन्यविशेषणात् तत् तस्य परमात्मनोऽनन्यैर्विशेषणैर्विशेषणात् विशेष्यमाणत्वात्। उपक्रमे हि "किं ब्रह्म" इत्यनेन ब्रह्मविचारारम्भः प्रतीयते ब्रह्मविचारेण परामृश्यमानस्य वैश्वनरस्य ब्रह्मत्वमेव युक्तम्। "तस्य ह वा एतस्यात्मनो वैश्वनरस्य" इत्यात्मशब्दसामानाधिकरण्यात्। तथा "तद्यथेषीका तूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति" इति वैश्वानरविज्ञानफलकीर्तनाच्च विज्ञायते वैश्वानरशब्देनात्र परमात्मैव प्रतिपाद्यते इति॥

॥ इति द्वितीयः पादः समाप्तः॥



# अथ तृतीयः पादः।



(प्रथमं द्युभ्वाद्यधिकरणम्)

"द्युभ्वाद्यायतनं स्वशब्दात् १ मुक्तोपसृप्यव्यपदेशाच्च २
नाऽनुमानमतच्छब्दात् प्राणभृच्च ३ भेदव्यपदेशात् ४
प्रकरणात् ५ स्थित्यदनाभ्यां च ६"

यस्मिन् द्योपृथिवीवाक्ये जीवो वाऽऽयतनं परः।
नाडीसम्बन्धजन्मभ्यां जीवः, शब्दात्स्वकात्परः॥

मुण्डकोपनिषदि श्रूयते—"यस्मिन् द्यौःपृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति। अत्र द्युभ्वाद्यायतनत्वेन जीवं प्रतिपादयति श्रुतिराहोस्वित् परमात्मानमिति विशयोऽस्ति। किं युक्तं

जीवमिति यत उत्तर वाक्ये "अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः" इत्यत्र नाडीसम्बन्धजन्मनी श्रुते जीव एवोपपद्येते । अत्रोच्यते 'शब्दात्सम्बन्धकात्परः' इति । "अमृतस्यैष सेतुः" इति परब्रह्मासाधारणशब्दादित्यर्थः । अमृतसेतुत्वस्य परमात्मन्येवोपपत्तेः । "तमेवं विद्वानमृत इह भवति" इत्यादौ परमात्मन एवामृतत्वप्राप्तिहेतुत्वप्रतीतेश्च ॥

---

( द्वितीयं भूमाधिकरणम् )

"भूमा संप्रसादादध्युपदेशात् ७ धर्मोपपत्तेश्च ८"

भूमगुणविशिष्टः किं प्रत्यगात्माथ वा हरिः ।
जीवः स्यात् प्राणनिर्देशात् सत्यनिर्देशतः परः ॥

छान्दोग्ये सप्तमप्रपाठकस्य २३ खण्डे श्रूयते "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इति । अत्र भूमेतिपदेन प्रत्यगात्मा प्रतिपाद्यते परमात्मा वेति संदेहः किं युक्तं प्रत्यगात्मेति।

अयं भावः—छान्दोग्ये सप्तमप्रपाठकस्य प्रथमखण्डे "अधीहि भगव इति होपससाद सनत्कुमारं नारदः" "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्, श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इतिप्रश्नानन्तरम्–"नामैवैतत्, नाम वा ऋग्वेदो यजुर्वेदः" इत्यारभ्य–"प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्" इति भूमगुणविशिष्टस्य प्राणशब्देन निर्देशः कृत इति भूमगुणविशिष्टः प्रत्यगात्मैव ।

तत्रोच्यते 'सत्यनिर्देशतः परः' इति । "एष तु वा अतिवदति यः सत्येनाति वदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञासे" इति सत्यशब्दाभिधेयस्य जिज्ञास्यत्वेनोपसंहारः कृतः सत्यशब्दाभिधेयत्वं च परमात्मन एव प्रसिद्धं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादौ । किं च "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादौ संप्रसादशब्दवाच्यात् प्रत्यगात्मतः सत्यशब्दाभिधेयस्य परमात्मन एवाधिकतयोपदेशोऽस्ति यं भगवन्तं प्राप्य प्रत्य-

गात्मा स्वेनरूपेणानन्दत्वादिना निष्पद्यते कृतं तत्र भगवति सर्वोत्कृष्टत्वसन्देहेन तस्माद् भूमगुणविशिष्टः परमात्मैवेति सिद्धम् ॥

---

( तृतीयमक्षराधिकरणम् )

"अक्षरमम्बरान्तधृतेः ९ सा च प्रशासनात् १०

अन्यभावव्यावृत्तेश्च ११ ।

वाजसनेयिनां वाक्येष्वक्षरं प्रकृतिर्मता ।
किं वा जीवोथ वा ब्रह्म विचिकित्सा त्रिधा मता ॥
आद्यः प्रकृतिवाचित्वाज्जीवो वाधारताश्रुतेः ।
अम्बरान्तधृतेर्ब्रह्म प्रशास्तृत्वादिकश्रुतेः ॥

वाजसनेयिनां पञ्चमाध्यायस्याष्टमे ब्राह्मणे श्रूयते—"स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन" इति । अत्राक्षरपदेन प्रकृतिरुच्यते जीवो वा ब्रह्म वेति विचिकित्सा त्रिधास्ति । तत्र प्रकृतिरित्येव युक्तं "अक्षरात्परतः परः" इत्यादावक्षरपदस्य प्रकृतिवाचित्वदर्शनात् । पूर्ववाक्ये चाकाशस्याधारः पृष्टस्तत्रोक्तं "स होवाच" इत्यादि, आकाशस्योतत्वं प्रोतत्वं च प्रकृतावेव युक्तमित्यक्षरपदेनात्र प्रकृतिरुच्यते । किं वा कृतमत्र शक्त्या प्रकृतिपरिग्रहेण—,

इत्युच्यते जीव इति, उक्तवाक्ये "अलोहिमतमः" इत्यादिना रजस्तमोरहितत्वमभिलप्यमानं प्रकृतौ नोपपद्यते तस्मादक्षरपदेन जीव उच्यते युक्तं हि जीवस्य रजस्तमोरहितत्वमस्थूलत्वादिकं च । "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादौ च जीवेष्वक्षरशब्दप्रयोगोपलब्धेः । किं च "अव्यक्तमक्षरे लीयते" इत्यादौ प्रकृत्याधारत्वं जीवस्य श्रूयते तद्द्वाराकाशस्याप्योतत्वं प्रोतत्वं च जीव उपपद्यते एव ।

अत्रोच्यतेऽक्षरपदवाच्यं ब्रह्मैव कुतः? अम्बरान्तधृतेः । अम्बरस्या-

काशस्यान्तः पारभूतमव्याकृतमम्बरान्तस्तस्य धृतेः । यद्यप्युक्तरीत्याम्बरान्तधृतिर्जीवेष्युपपद्यते तथाप्यग्रिमवाक्य उक्तमक्षरमुद्दिश्य श्रूयते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तदेतादृशं शासनकर्तृत्वं परमात्मन्येवोपपद्यते न जीव इत्यक्षरपदवाच्यमत्र परमात्मैवेति निर्धार्यते ॥

---

(चतुर्थमीक्षतिकर्माधिकरणम्.)

"ईक्षतिकर्म व्यपदेशात् सः १२"

शैब्यप्रश्नोत्तरे वाक्ये पुरुषः कमलासनः ।
आहोस्वित्परमात्मा स्यादाद्यो लोकक्रमान् मतः ।
परात्मा ह्यमृतत्वादेर्व्यपदेशात् परत्वतः ॥

प्रश्नोपनिषदि तुर्यप्रश्ने श्रूयते "अथ हैनं शैब्यः सत्यकामः पप्रच्छ—स योह वै तद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति" उत्तरवाक्ये च "यः पुनरेतं त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परं पुरिशयं पुरुषमीक्षते" इति । अत्र ध्यानेक्षणयोः कर्मलक्षणः पुरुषः किं कमलासनः किं वा परमात्मेति विशयः ।

तत्रोङ्कारोपासनाक्रमेण गम्यलोकक्रमनिर्देशादाद्यपक्ष एव श्रेयान् । तथा हि—"स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते" "अथ यदि द्विमात्रेण मनसि संपद्यते सोन्तरिक्षं यजुर्भिरुन्नीयते" इति पूर्वं श्रूयते तत्रैकमात्रोपासनया नरलोकप्राप्तिमभिधाय तथा द्विमात्रोपासनयान्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रोपासनयान्तरिक्षात्परेण कमलासनलोकेनैव प्राप्तव्यं तत्र गत्वा च कमलासनस्यैवेक्षणं युक्तं तस्य तल्लोकाधिपतित्वात् । एतस्माज्जीवघनात् व्यष्टिपुरुषात्परत्वमपि कमलासनस्योपपद्यते समष्टिपुरुषत्वात्तस्मादत्र पुरुषशब्दाभिधेयः कमलासन एव ।

अत्रोच्यते 'परात्मा' इति । वाक्यशेषश्लोकः श्रूयते "ऋग्भिरेतं

यजुर्भिरन्तरिक्षं स सामभिर्यत्तत् कवयो वेदयन्ते । तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति" इति । अत्रोक्तामृतत्वादिरूपस्य परमात्मन्येवोपपत्तेः । परत्वतश्च-स एतस्मा ज्जीवघनात् परमित्यत्र जीवघनशब्देन कमलासनस्यापि जीवत्वेन संग्रहात् तस्मात् परत्वं परमात्मन एवोपपद्यते तस्मादत्र ध्यानेक्षणयोः कर्म परमात्मैवेति विज्ञेयम् ॥

---

(पञ्चमं दहराधिकरणम्)

"दहर उत्तरेभ्यः १३ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च १४
धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १५ प्रसिद्धेश्च १६ इतर-
परामर्शात् स इति चेन्नासम्भवात् १७ उत्तराच्चेदा-
विर्भूतस्वरूपस्तु १८ अन्यार्थश्च परामर्शः १९
अल्पश्रुतेरिति चेत्तदुक्तम् २० अनुकृते-
स्तस्य च २१ अपि स्मर्यते २२"

दहराकाशवाक्ये किं भूतो जोवोथ वा परः ।
भूतः शब्दप्रसिद्धेः स्याज्जीवो वा वाक्यशेषतः ।
सत्यसंकल्पतादिभ्यः परात्मा दहरो मतः ॥

इदमामनन्ति–"अथ यदिदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति अत्र दहराकाशः किं भूताकाश आहोस्विज्जीवोथ वा परमात्मेति विशयः । तत्र भूताकाश इत्येव युक्तं यत आकाशशब्दस्य तत्रैव लोके प्रसिद्धिरस्ति, इतिचेन्न-तत्रैवाष्टमप्रपाठकस्य तृतीयखण्डे वाक्यशेषतया श्रूयते–"अथ य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति" इति । अत्र च वाक्यशेषे संप्रसादशब्दाभिधेयस्य जीवस्य प्रत्यगात्मनः परामर्शाद् दहराकाशो जीव एवेति विज्ञायते ।

अत्रोच्यते दहराकाशो ब्रह्मैव यतस्तत्रैव सप्तमखण्डे उक्ता अपहतपाप्मत्वसत्यसंकल्पत्वादयो धर्मा ब्रह्मण्येवोपपद्यन्ते न भूताकाशे न वा जीवेपि च। संप्रसादवाक्येप्युक्तममृतत्वादिकं सत्यनामत्वं च ब्रह्मधर्म एव "सत्यं ज्ञानमनन्तं ब्रह्म"—इति प्रसिद्धेस्तस्माद्दहराकाशोन्वेष्टव्यतयात्र निर्दिष्टः परमात्मैव तस्यैवान्वेषणयोग्यत्वात् ॥

---

(षष्ठं प्रमिताधिकरणम्)

"शब्दादेव प्रमितः २३ हृद्यपेक्षया तु मनुष्याधिकारत्वात् २४"

अङ्गुष्ठमात्रमानेन जीव उक्तोथ वा परः

तन्मात्रत्वश्रुतेर्जीव ईशानशब्दतः परः ॥

कठोपनिषदि चतुर्थवल्ल्यामाम्नायते "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजिगुप्सते। एतद्वैतत्। अङ्गुष्ठमात्रः पुरुषोज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाऽद्य स उ श्वः, एतद्वैतत्।" इति। अत्राङ्गुष्ठमात्रमानेन जीवो लक्षितः किं वा परमात्मेति विचिकित्सास्ति। किं युक्तं जीव इति, कुतः? अन्यत्रापि जीवस्याङ्गुष्ठमात्रमानवत्त्वश्रवणात् यथा—"प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः" इत्यत्र स्वकर्माधीनसंचारेणाङ्गुष्ठमात्रो जीव एव निश्चित इति स एव जीवः कठश्रुतावङ्गुष्ठमात्र इत्यनेन प्रत्यभिज्ञायते, इति चेन्न,-ईशानो भूतभव्यस्येति सकलभूतभव्येशितृत्वं परमात्मन एवोपपद्यते न जीवस्येत्यङ्गुष्ठमात्रमानेन परमात्मैव लक्षितः। तस्य च परमात्मन उपासकहृदये वर्तमानत्वादुपासकहृदयमानसमानमानेन निर्देशः कृतोङ्गुष्ठमात्र इति। हृदयस्याङ्गुष्ठमात्रत्वात्तस्मादत्र परमात्मैव प्रतिपाद्यते ॥

---

(सप्तमं देवताधिकरणम्)

"तदुपर्यपि बादरायणः सम्भवात् २५ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् २६ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् २७ अत एव च नित्यत्वम् २८ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च २९"

ब्रह्मोपासनविद्यायामधिकारो दिवौकसाम् ।
नह्येवास्त्यशरीरत्वादस्त्यर्थित्वादिसम्भवात् ॥

उपासकहृदयमानसमानमानत्वेनाङ्गुष्ठमात्रत्वं परमात्मन उक्तं तत्र ब्रह्मोपासनविद्यायां मनुष्याणामिव देवादीनामधिकारो नास्त्यस्ति वेति विचार्यते। किं युक्तम्? नास्तीत्येव यतः शरीरिणामेव विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेतिसाधनसप्तकानुगृहीतानामधिकारः संभवति शरीरिणामेव विवेकाद्यनुग्रहपात्रत्वाद् देवादीनां च सशरीरत्वे नास्तिप्रमाणमिति नास्त्यधिकारः, इति चेन्न-देवादीनामप्यर्थित्वादिसंभवादस्त्यधिकारः। अयं भावः-सर्वात्मना दुःखोपशान्तिर्हि मोक्ष एवास्ति मोक्षश्च ब्रह्मोपासनाधीन इति मोक्षार्थित्वेन समर्थत्वेन च युक्त एवाधिकारो दिवौकसां श्रूयते च " तं देवाज्योतिषां ज्योतिरायुर्होपासतेमृतम्" इति ।

विवेकः-कायशुद्धिः । विमोकः-कामानभिष्वङ्गः । अभ्यासः-आलम्बनसंशीलनं पुनः पुनः । क्रिया-यथाशक्ति पञ्चमहायज्ञानुष्ठानम् । कल्याणानि-सत्यार्जवदयादानाहिंसानभिध्याः (अभिध्या परकीये स्वबुद्धिस्तद्राहित्यं संपाद्यम्) अनवसादः-मनसोऽदीनत्वम् । अनुद्धर्षः--भगवत्प्राप्तिविषयकातिसन्तोषाभावः ॥

---

(अष्टमं मध्वधिकरणम्)

"मध्वादिष्वसंभवादनाधिकारं जैमिनिः ३० ज्योतिषि भावाच्च ३१ भावं तु बादरायणोस्ति हि ३२"

देवोपासनविद्यायामधिकारो दिवौकसाम् ।
नोऽसंभवादनन्यत्वादस्त्यन्तर्याम्युपासनात् ॥

भवतु ब्रह्मविद्यायामधिकारो देवादीनां यत्र हि मधुविद्यादौ देवताविशेष एवोपास्यत्वेन निर्दिश्यते यथा-"असौ वा आदित्यो देवमधु" इत्यत्रादित्य एव मधुत्वेनोपास्यत्वेन निर्दिष्टस्तत्र देवदीनां नास्त्वधिकारोऽस्ति वेति विचारसरणिमारोहति, किं युक्तं नेति यत आदित्यस्यादित्यानन्यत्वेनोपासनस्यासंभव एवास्ति परस्यैवोपासनं भवति न हि स्वस्येत्यर्थः । नचान्यः कोप्यादित्योस्ति यः खल्वपरेणा-

दित्येनोपास्येत । किं च "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति देवानां ब्रह्मोपासनं श्रूयमाणं मधुविद्यादावधिकारं निराकरोतीति प्राप्ते—

ब्रूमः—अस्तीति यद्यप्युक्तयुक्त्या देवादीनां देवोपासनायां नास्त्यधिकार इत्येव प्रतीयते तथाप्यादित्यादीनां स्वावस्थब्रह्मोपासने संभवत्येवाधिकारः । इदानीमादित्यत्वप्राप्तौ सत्यामपि कल्पान्तर आदित्यत्वप्राप्तये स्वावस्थब्रह्मोपासनं मधुत्वेन युक्तमेवेत्यर्थः । न हि स्वमुखनिरीक्षणं न संभवतीत्यत्र प्रमाणमस्ति ॥

---

( नवममपशूद्राधिकरणम् )

"शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ३३ क्षत्रियत्वावगतेश्च ३४ उत्तरत्र चैत्ररथेनलिङ्गात् ३५ संस्कारपरामर्शात्तदभावाभिलापाच्च ३६ तदभावनिर्धारणे च प्रवृत्तेः ३७ श्रवणाध्ययनार्थप्रतिषेधात् ३८ स्मृतेश्च ३९"

ब्रह्मविद्याधिकारः किं शूद्रस्यास्त्यथ वा नहि ।
अस्त्यर्थित्वादिभि,र्नास्ति सामर्थ्यादेरभावतः ॥

ब्रह्मविद्यायां मनुष्याणामधिकार उक्तस्तत्र मनुष्यत्वाविशेषाच्छूद्रस्याप्यस्त्यधिकारो न वेति विचिकित्सा मतिसोपानमारोहति । इदमेव विचिकित्सामूलं यत्कर्मकाण्डे नास्त्यधिकारः शूद्रस्य ब्रह्मविद्यायां च मनुष्याणामधिकारः साधित इति कर्मकाण्डानधिकारसादृश्यात् किं ब्रह्मविद्यायामप्यनधिकारः स्यात् किं वा मनुष्यत्वाविशेषादधिकारः स्याद् द्विजातिवत् । किं युक्तम् ? अस्त्यधिकार इति यतो मोक्षार्थित्वं ब्रह्मभावनसामर्थ्यं च ब्रह्मविद्याधिकारनिदानं तच्च शूद्रस्यापि सम्भाव्यते मादृशपापजीवादृते मोक्षाभिलाषो मोक्षोपायेषु च प्रवृत्तिः कस्य न स्यात्तस्मादस्त्यधिकारः । अग्निविद्यासु तु शूद्रस्य विद्याभावान्नास्त्यधिकारो ब्रह्मोपासनं तु मनोवृत्तिमात्रमिति तत्र कस्मान्नस्यादधिकारः । इत्येवं प्राप्ते—

अभिधीयते नास्तीति । अयं भावोऽर्थित्वसत्त्वेऽप्यसमर्थस्याधिकारो न सम्भवति सामर्थ्यं च ब्रह्मस्वरूपतदुपासनप्रकारविज्ञानाधीनं

ब्रह्मस्वरूपतदुपासनप्रकारज्ञानं चाध्ययनाधीनमध्ययनं चोपनयनाधीनमुपनयनं च शूद्रस्य नास्त्येव "न शूद्रः संस्कारमर्हति" इति वचनात् तस्मान्नास्त्यधिकारः। इतिहासपुराणश्रवणं हि शूद्रस्य पापक्षयार्थमत्र नोपासनार्थम्। अयमभिसन्धिः "आत्मा वा रे द्रष्टव्यः" इति नियमविधिना पक्षे प्राप्तनखविदलनस्येव पक्षे प्राप्तानां वेदान्तमूलेतिहासपुराणपौरुषेयप्रबन्धानां परिहारः क्रियते इति "श्रावयेच्चतुरो वर्णान्" इति विधिरप्यस्तीतीतिहासपुराणश्रवणं पापक्षयफलकमिति कल्प्यते। "आजहार इमाः शूद्र" इत्यत्र तु शोचनाच्छूद्र इति सम्बोधनं न तु शूद्रत्वजातिप्रयुक्तं सम्बोध्यस्य जानश्रुतेः क्षत्रियत्वात् तस्मान्नास्त्यधिकारः शूद्रस्य ब्रह्मोपासनायाम् ॥

---

(उक्तप्रमिताधिकरणशेषाधिकरणम्)

"कम्पनात् ४० ज्योतिर्दर्शनात् ४१"

अङ्गुष्ठमात्रमानो हि परमात्मा प्रतीयते।
यदिदं किं च वाक्योक्तधर्मस्यात्रैव सम्भवात् ॥

प्रमिताधिकरणमारभ्य मध्येऽधिकारविषयकाणि त्रीण्यधिकरणानि निर्माय भगवान् बादरायणिर्मृगेन्द्रावलोकितन्यायेन पुनरपि प्रमिताधिकरणमालोचयति सूत्रद्वयेन कम्पनादित्यादिना। "अङ्गुष्ठमात्रः पुरुषः" इति कठस्य चतुर्थवल्ल्यामाम्नायोपसंहारे षष्ठवल्ल्यां पुनः "अङ्गुष्ठमात्रः पुरुषोन्तरात्मा" इत्याम्नातं मध्ये च षष्ठवल्ल्यामेव "यदिदं किं च जगत्सर्वम्" "भयादस्याग्निस्तपति" पञ्चमवल्ल्यां च "न तत्र सूर्यो भाति" इत्याद्याम्नायत आम्नातानां चाङ्गुष्ठमात्रपुरुषनिमित्तककम्पनादीनां परमात्मन्येवोपपत्तिरस्तीत्यङ्गुष्ठमात्रः पुरुषः परमात्मैव ॥

---

(दशममर्थान्तरत्वादिव्यपदेशाधिकरणम्)

"आकाशोऽर्थान्तरत्वादिव्यपदेशात् ४२ सुषुप्त्युत्क्रान्त्योर्भेदेन ४३ पत्यादिशब्देभ्यः ४४"

आकाशो ह श्रुतौ मुक्तः परमात्माथ वा मतः।
पूर्ववाक्यान्वयान्मुक्तः परस्तल्लिङ्गदर्शनात् ॥

छान्दोग्याष्टमप्रपाठकस्य चतुर्दशखण्डे श्रूयते—“आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा” इति। यद्यपि दहराकाशस्य परमात्मत्वं प्रतिपादितमित्यत्राकाशपदार्थे न युक्तः संशयः किं तु परमात्मत्वमेव विज्ञेयं तथापि मध्ये प्रजापतिवाक्यानां व्यवधानात् पूर्वखण्डे च “अश्व इव रोमाणि विधूय पापम्” इति मुक्तोपक्रमाद् युक्तः संशयः किमत्राकाशपदेन मुक्तात्मा मतः परमात्मा वेति। किं युक्तम्? मुक्तात्मेति यतः पूर्ववाक्ये “अश्व इव रोमाणि विधूय पापम्” इति मुक्तात्मानमुपक्रम्योच्यते “आकाशो ह वै” इत्यादि। नामरूपनिर्वोढृत्वं च मुक्तात्मनोपि सम्भवति पूर्वजन्मापेक्षया।

अत्रोच्यते पर इति। नामरूपनिर्वोढृत्वं न नामरूपधारकत्वं किं तु नामरूपव्याकर्तृत्वं तच्च परमात्मन एव सम्भवति नान्यस्य कस्यचिदपि, जगद्व्यापारानधिकृतत्वात्। श्रूयते च “अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणि” “तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते” इति। तस्मादाकाशपदेनात्र परमात्मैव प्रतिपाद्यते॥

॥ इति तृतीयः पादः समाप्तः ॥



## अथ चतुर्थः पादः।

(प्रथममानुमानिकाधिकरणम्)

“आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १ सूक्ष्मन्तु तदर्हत्वात् २ तदधीनत्वादर्थवत् ३ ज्ञेयत्वावचनाच्च ४ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६ महद्वच्च ७”

इन्द्रियेभ्यः परा ह्यस्मिन्नऽव्यक्तेन किमुच्यते।
प्रधानं महदन्यत्वाद् देहोऽर्थक्रमतो मतः॥

कानि चिद्वाक्यानि केवलप्रधानकारणत्वप्रतिपादनपराणीव प्रतीयन्ते तेषां प्रधानकारणत्वप्रतिपादनपरत्वं निराक्रियते येनोक्तं ब्रह्मकारणत्वं दृढतरं स्यादिति तुर्यपादमारभते सूत्रकारः ।

इदमाम्नायते—"इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः महतः परमव्यक्तमव्यक्तात् पुरुषः परः पुरुषान्न परं किं चित् सा काष्ठा सा परा गतिः" इति ।

अत्राऽब्रह्मात्मकं प्रधानमव्यक्तशब्देनाभिधीयत उत नेति संदेहे प्रधानमेवाभिधीयते महतः परमव्यक्तमिति महतः परत्वश्रवणात् । यद्यपि महतः परत्वं पुरुषस्याप्यस्ति तथाप्यव्यहितं महतः परत्वं प्रधानस्यैवेत्यव्यक्तशब्देनात्र प्रधानमेवाभिधीयते । पुरुषपदेन जीवोभिधीयते "पुरुषान्न परं किंचित्" इत्यनेन पुरुषात् परस्य तत्त्वस्य परमपुरुषस्य प्रतिषेधात् । बुद्धेरात्मेत्यात्मशब्दो महत्समानाधिकरणो महान्तमेवाभिधत्ते पूर्वोक्ततत्त्वेषु ब्रह्मणः श्रवणाभावाच्च प्रधानकारणवाद एव प्रतिपादितो भवतीति,—

मा वोचः—नात्राब्रह्मात्मकं प्रधानमव्यक्तशब्देनोच्यते किं तु देहः । अयमभिसन्धिः—यदि वाक्योपक्रमे कारणत्वनिबन्धनं परत्वं प्रतीयेत तदात्रापि महतः परत्वश्रवणात् महत्कारणलक्षणं प्रधानमेवाव्यक्तशब्देन प्रतिपाद्यत इति प्रतीयेत न चैवमस्ति, नह्यर्थानामिन्द्रियकारणत्वं मनसश्चार्थकारणत्वं येन कारणत्वनिबन्धनं परत्वं स्यात् । किं तु प्राधान्यप्रयुक्तमेव परत्वं श्रूयते तथा हि—इन्द्रियाणि ह्यर्थालोचनक्षिप्तान्येव दुर्ग्रहाणि भवन्तीति तेभ्योर्थस्य परत्वमुक्तम् । अर्थासंनिधावपि मनो विषयपरायणं भवत्येवानिगृहीतमित्यर्थापेक्षया मनसः परत्वमुक्तम् । मनसोपि बुद्धेः परत्वमध्यवसायपरत्वात् । बुद्धेरपि कर्तृत्वेन प्राधान्याज्जीवात्मा परः । आत्मनोपि सकलपुरुषार्थप्रवृत्तिषु शरीरायत्तत्वात्तस्मादप्यव्यक्तशब्दवाच्यस्य शरीरस्य परत्वमुच्यते । शरीरसबन्धादीनामपि परमात्माधीनत्वात् तस्मादपि शरीरात् परमात्मनः परत्वमुच्यते "पुरुषः परः" इति । तस्मान्नात्राव्यक्तशब्देन प्रधानमुच्यते किं तु शरीरम् ।

"आत्मा महान् परः" इत्यत्र महानित्यात्मविशेषणमात्मपदेन जीवात्मोच्यते पुरुषपदेन च परमपुरुषो ब्रह्मैवोच्यते तस्माद्ब्रह्मकारणवाद एव प्रतिपादितो भवति न प्रधानकारणवादः । यथा हि घटस्य मृत्पदेनाभिधानं भवति तत्कस्य हेतोः? घटस्य मृत्कारणकत्वादेवं

पूर्वं-प्रतिपादनपरमिति शिरो युक्तं यतोऽत्र साङ्ख्यतत्त्वानां पञ्चविंशतिसङ्ख्या प्रतीयते तदुक्तम्-"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति विकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति।

अत्रोच्यते नेति—नेदं वाक्यं साङ्ख्यतत्त्वप्रतिपादनपरमस्त्याधिक्यात्। पञ्चभ्यः पञ्चजनेभ्यः पृथगप्याकाशात्मनोः प्रतीतिरस्ति न ह्येतत् साङ्ख्यपक्षे सङ्गच्छते तदुक्तं सूत्रे नानाभावादिति। वाक्यशेषतश्च-"प्राणस्य प्राणमुतचक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो ये विदुः" इत्यस्माद्वाक्यशेषात् प्राणादय एव पञ्चजनपदंवाच्यास्ते च पञ्चेति प्रतीयते। साङ्ख्यपक्षे हि पञ्चेति पदस्य पञ्चजनपदविशेषणत्वेऽपि पञ्चविंशतिसङ्ख्या नोपलभ्यते पञ्चजनपदघटितपञ्चेत्यवयवं प्रति विशेषणत्वासम्भवात्। तस्मादत्र प्राणादीनां (त्वगिन्द्रियादीनाम) पञ्चानामाकाशपदलक्ष्यमहाभूतानां च परमात्माश्रयत्वं प्रतिपाद्यते। प्राणशब्देन वायुसंबन्धित्वात्त्वगिन्द्रियमुच्यते, अन्नपदेन च घ्राणरसने ग्राह्ये। प्राणस्य प्राणमित्यस्य प्राणस्य = त्वच आधार इत्यर्थः। एवमग्रेऽपि श्रुत्यर्थो ज्ञेयः॥

---

(चतुर्थं कारणत्वाधिकरणम्)

"कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४ समाकर्षात् १५"

**प्रधानकारणो लोकः स्रष्टू रूपबहुत्वतः।**
**आकाशादिनिदानत्वाल्लोकस्य ब्रह्म कारणम्॥**

पुनरपि प्रधानकारणवादी प्रत्यवतिष्ठते प्रपञ्चस्य प्रधानमेव कारणं यतः स्रष्टुर्बहुरूपता श्रूयते यथा-"सदेव सोम्येदमग्र आसीत्" "असद्वा इदमग्र आसीत्" इत्यादिषु स्रष्टुः सद्रूपत्वमसद्रूपत्वं च श्रूयते न ह्येकस्यैव ब्रह्मणः सद्रूपत्वमसद्रूपत्वं च सम्भवति सद्रूपत्वेन त्वया स्वीकृतेस्तस्मात् प्रधानमेव जगत्कारणं, प्रधानस्य सद्रूपत्वं स्वरूपेणोच्यतेऽसद्रूपत्वं च कार्यरूपेण। वाक्यान्तरं च प्रधानकारणत्वस्यैवोपोद्बलकमस्ति-"तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यव्याकृते नामरूपशून्ये प्रधाने प्रलयमभिधाय "तन्नामरूपाभ्यां व्याक्रियत" इत्यव्याकृतादेव प्रधानात् सृष्टिमभिदधाति।

अत्रोच्यते आकाशादीति । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "तत् तेजोऽसृजत" इत्यादिश्रुतेर्ब्रह्मण एव जगत्कारणत्वं निश्चीयते। "सत्यं ज्ञानमनन्तं ब्रह्म" "तदैक्षत बहु स्याम्" इत्यादिवाक्यश्रुतज्ञानेक्षणादीनां जगत्कारणधर्माणां जडे प्रधाने कथमप्युपपत्तिर्नास्तीति ब्रह्मैव लोकस्य कारणम् । "असद्वा इदमग्र आसीत्" इत्यत्रापि प्रलयकाले नामरूपविभागाभावेन नामरूपप्रतियोगिकासत्त्वेन तत्सम्बन्धित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते । "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते । तदेव च ब्रह्म स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियत इत्युच्यते॥

---

( पञ्चमं जगद्वाचित्वाधिकरणम् )

"जगद्वाचित्वात् १६ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् १७ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके १८"

जीव एव परं ब्रह्म सम्बन्धात् पुण्यपापयोः ।

ब्रह्म जीवात्परं-लोके कर्मशब्दस्य वृत्तितः ॥

सम्प्रत्यपि नोपशाम्यति साङ्ख्यवादी किं तु प्रत्यवतिष्ठते–यदीक्षणादीनां चेतनधर्माणां जडे प्रधान उपपत्तिर्नास्ति तदेक्षणादिधर्मसमन्वययोग्यः क्षेत्रज्ञ एव ब्रह्म । " आत्मा वा अरे ज्ञातव्यः प्रकृतितो विवेक्तव्यः" इत्यादौ जगत्कारणविषयकाण्येव दर्शनादीनि संपाद्यत्वेन श्रूयन्त आत्मा च क्षेत्रज्ञ एवेति स एव परम्ब्रह्म न ततोऽर्थान्तरभूतम् । किं च " यो वै बालक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वेदितव्यः " अत्र मोक्षोपायवेदनकर्म जगत्कारणमेव वक्तव्यं तस्य च जगत्कारणस्य कर्मसम्बन्धोऽत्र श्रूयते यस्य चैतत्कर्मेति कर्म च पुण्यपापलक्षणं तत्रैव लोके कर्मपदव्युत्पत्तेः पुण्यपापयोश्च त्वदभिमतब्रह्मणि लेशोऽपि नोपपद्यते क्षेत्रज्ञे च स्पष्ट एव पुण्यपापलक्षणकर्मसम्बन्ध इति क्षेत्रज्ञ एव परम्ब्रह्म । तथा च हिरण्यगर्भेन्द्रादित्यादिषु मध्ये कोऽप्येक ईक्षणादिकर्ता मन्तव्य स एव मोक्षप्राप्तये वेदितव्यस्तत्र चातिशयितसौभाग्यवति सर्वमुपपद्यते मोक्षप्रदत्वं वा जगत्कर्तृत्वादिकं वा ।

इति प्राप्तेऽभिधीयते 'ब्रह्म जीवात्परम्' इति। हेतुमाह लोक इ-त्यादिना। उक्तश्रुत्युक्तकर्मशब्दस्य लोके प्रपञ्चे वृत्तिरस्तीत्यर्थः। एतत्पदपरामृष्टं निखिलचिदचिन्मिश्रं जगत् कार्यभूतं तस्य परमा-त्मन एव कर्म=कार्यं भवितुमर्हति न क्षेत्रज्ञस्य। तस्मान्नात्र कर्मशब्दः पुण्यपापपरो येन क्षेत्रज्ञः श्रुतेस्तात्पर्यभूमिः स्याद्वेदनकर्मतया। त-तश्च प्रकृतिपुरुषाभ्यामर्थान्तरं परं ब्रह्मैव निखिलजगत्कारणं तदेव च वेद्यम्॥

---

(षष्ठं वाक्यान्वयाधिकरणम्)

"वाक्यान्वयात् १९ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः २० उत्क्रमिष्यत एवंभावादित्यौडुलोमिः २१ अवस्थितेरिति काशकृत्स्नः २२"

**आत्मदर्शनवाक्येषु जीव आत्माथ वा परः।**
**जीवः प्रतीतितस्तस्य वाक्यानामन्वयात् परः॥**

इदमाम्नायते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि-ध्यासितव्यः। मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्म-नस्तु कामाय सर्वं प्रियं भवति" इत्यारभ्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यन्तम्। तत्र यो मोक्षोपायदर्शनकर्मतयाश्रुत आत्मा स किं साङ्ख्य-संमतिसिद्धः पुरुष उत परः परमपुरुष इति विचिकित्सायामभिधी-यते—साङ्ख्यसंमतिसिद्धः पुरुषो जीव एव तस्यैव जीवस्यादिम-ध्यावसानेषु प्रतीतेः। वाजसनेयिनामुपनिषदि चतुर्थब्राह्मणे प्रथमं "स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति" इतिश्रूयते। मध्ये च "आत्मा वा अरे द्रष्टव्यः" अन्ते च "विज्ञातारमरे केन विजानीयात्" इति श्रूयते। आत्मशब्दस्य विज्ञातृशब्दस्य च जीव एव प्रसिद्धिरिति जीव एव द्रष्टव्यत्वेनोपदिश्यते।

तत्रोच्यते वाक्यानामिति। वाक्यानामुक्तानां परस्परमन्वयात् परमात्मैव दर्शनकर्मतयोपदिश्यत इति प्रतीयते। आत्मदर्शनं हि मोक्षोपायतया याज्ञवल्क्येन मैत्रेय्यै समुपदिष्टं मोक्षोपायभूतं च द-

र्शनं परमात्मदर्शनमेव "तमेवं विदित्वातिमृत्युमेति नान्यः पन्था अयनाय विद्यते" "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतेः। यदि प्रकृतिपुरुषविवेक एव मोक्षोपायः स्यात्तदा "येनाहं नामृता स्यां किमहं तेन कुर्याम" इति वित्ताद्यनादरो न श्रूयेत यतो वित्तादिक-मपि प्राकृतं प्रकृतिस्वरूपं ततोप्यात्मविवेकस्य मोक्षोपायैकदेशतया-त्मनि तत्प्रतियोगिकभेदज्ञानाय वित्तादिज्ञानापेक्षणादादरएव स्या-द्वित्तादौ। तस्मात्परमपुरुषदर्शनमेव मोक्षोपायः। मोक्षोपायदर्शन-कर्मतयाभिमतः परमात्मैवात्मशब्देनात्र प्रतिपाद्यते। "न वा अरे पत्युः कामाय" इत्यादिश्रुतेस्तु यथा लोक आत्मेष्टसम्पत्तये पत्याद-य उपादीयन्ते तथात्मनः परमेष्टसम्पत्तिप्रदः प्रियतमः परमपुरुष एवोपादेयस्तत्प्राप्तये च स एव द्रष्टव्य इत्यभिप्रायः॥

---

( सप्तमं प्रकृत्यधिकरणम )

"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् २३ अभिध्योपदेशाच्च २४ साक्षाच्चोभयाम्नानात् २५ आत्मकृतेः २६ परिणामात् २७ योनिश्च हि गीयते २८"

उपादानं प्रधानं किं प्रपञ्चस्याथ वा हरिः।
हरिर्नोऽपरिणामित्वात् प्रधानं परिणामि तत्।
हरिरेव ह्युपादानं प्रतिज्ञानादिभिः श्रुतम्॥

योगी प्रत्यवतिष्ठते—यद्यपीक्षणादिधर्मसमन्वयात्सर्वज्ञमेव परं ब्रह्म जगत्कारणं तथापि ब्रह्म निमित्तकारणमेव, नोपादानम। उपादा-नत्वं हि परिणामिन एवोपपद्यते। परमात्मा चापरिणामीति श्रूयते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम" इति। प्रधानस्य च परिणामिनो युक्तमुपादानत्वम। तस्मात्प्रधानमधिष्ठाय जगत्करोतीति परमात्मा प्रपञ्चस्य निमित्तकारणमेव। श्रूयते च परमात्मनः प्रधा-नाधिष्ठानम—"विकारजननीमज्ञामष्टरूपामजां ध्रुवां ध्यायतेऽध्यासि-ता तेन तन्यते प्रेर्यते पुनः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महे-श्वरम" इत्यादि। स्मर्यते च "मयाऽध्यक्षेण प्रकृतिः सूयते सचरा-चरम" इति।

अत्रोच्यते हरिरेवेति। प्रपञ्चस्योपादानकारणं हरिः = परमात्मैव प्रतिज्ञानादिभिः—प्रतिज्ञादृष्टान्ताभ्याम्। प्रतिज्ञा तावत् "स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि परमात्मन एव प्रपञ्चोपादानकारणत्वं सूचयति। उपादानज्ञानेनैव सर्वतत्कार्यज्ञानोपपत्तेर्नहि निमित्तकरणीभूतकुलालज्ञानेन घटादयो ज्ञातुं शक्यन्ते तत्कस्य हेतोः? कुलालस्योपादानत्वाभावात्। शक्यते च ज्ञातुमुपादानस्य मृदो ज्ञानेन। दृष्टान्तश्च—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्युपादानज्ञानेन सर्वतत्कार्यवर्गज्ञाननिदर्शनेन प्रपञ्चोपादानत्वं ब्रह्मण एव सूचयति श्रुतिः। अनन्तशक्तिविशिष्टस्य वासुदेवस्य परमात्मनो निमित्तोपादानकारणत्वे न कोऽपि विरोधः। श्रूयते चाभिन्ननिमित्तोपादनत्वं परमात्मनः—"किं स्विद्वनं क उ स वृक्षः" इत्यारभ्य "ब्रह्म वनं ब्रह्म स वृक्षः" इत्यन्तम्। वृक्षपदमुपादानवाचकम्॥

---

(अष्टमं सर्वव्याख्यानाधिकरणम्)

"एतेन सर्वे व्याख्याता व्याख्याताः १९"

पादचतुष्टयोक्तेन न्यायवर्गेण बुध्यताम्।
वेदान्तैः कारणत्वेन ब्रह्मैव प्रतिपादितम्॥

पादचतुष्टयोक्तेन न्यायनिकरेण सर्वे वेदान्ता जगत्कारणत्वेन ब्रह्मैव प्रतिपादयन्ति। तस्मिन्नेव च परब्रह्मणि श्रीनिवासे सकलचेतनाचेतनविलक्षणे निरस्तनिखिलदोषेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे जीवोद्धारैकाध्वरदीक्षिते मदीयपापापराधनिचयगणनाश्रान्ते मदीयपापापराधक्षमायां कृपणतमे समन्वयोऽस्ति सकलवेदान्तानामित्यवधार्यम्॥ श्रियै नमः॥

॥ इति चतुर्थः पादः समाप्तः॥

॥ इति पञ्चनदीयसुदर्शननिर्मितायां विशिष्टाद्वैताधिकरणमालायां प्रथमोऽध्यायः समाप्तः॥



अथ

## द्वितीयाध्यायस्य प्रथमः पाद आरभ्यते ।

---

(प्रथम स्मृत्यधिकरणम्.)

"स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् १
इतरेषां चानुपलब्धेः २"

साङ्ख्यस्मृतिः प्रमाणं किं वा ब्रह्मप्रतिपादिका ।
कपिलाप्तत्वतः पूर्वं तासां धर्मेऽवकाशतः ।
ब्रह्मारूढस्मृतीनां तत् प्रमाण्यं हि बहुत्वतः ॥

पुनरपि साङ्ख्यवादी प्रतिवदति—यद्यपि दृष्टविरोधे स्मृतिरनादरणीया भवति यथा "औदुम्बरी सर्वा वेष्टया" इति स्मृतेः "औदुम्बरीं स्पृष्ट्वोद्गायति" इति श्रुतेश्च परस्परं विरोधे । तथापि वेदान्तवेद्यस्य तत्त्वस्य दुरवबोधत्वेन स्मृतिसाहाय्येनैव कस्मिंश्चित्तत्त्वे वेदान्तानां समन्वयो वक्तव्य इति, "ऋषिं प्रसूतं कपिलम्" इत्यादिवचनजातेन च कपिलमहामुनेराप्तत्वे गृहीते तन्निर्मितस्मृतेः परमप्रामाण्यात् तत्साहाय्येनैव वेदान्तानां समन्वयो युक्त इति सिद्धं साङ्ख्यमतेन । न च मन्वादिस्मृतीनां वैफल्यं तासां धर्मे=धर्मोपबृंहणे सावकाशत्वात् । न चैवं साङ्ख्यस्मृतिः क्वचिदपि सावकाशास्तीति प्राप्ते—

उच्यते-ब्रह्मेति, ब्रह्मारूढस्मृतीनां ब्रह्मप्रतिपादिकानामेव स्मृतीनां तत्प्रामाण्यं बहुत्वतः । बह्वयः खलु मन्वादिस्मृतय एकसाङ्ख्यस्मृत्यनुरोधेन न हि तासामप्रामाण्यमुचितम् । नह्येकस्यार्थे कुलं त्यज्यते । श्रूयते च "यद्वै किं चन मनुरवदत्तद्भेषजम्" इति । तस्मान्मन्वादिस्मृतिसाहाय्येनैव वेदान्तानां समन्वयो वक्तव्यः मन्वादिभिश्च "आसीदिदं तमोभूतम्" इत्यादिना चिदचिन्मिश्राखिलजगत्कारणं परं ब्रह्मैवेति प्रतिपाद्यते ततश्च तत्रैव भगवति श्रीनिवासे समन्वयो वेदान्तानां युक्तः । भगवद्गीतासु च "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इत्याद्युच्यते परमात्मकारणत्वम् । न च

कपिलोक्ततत्त्वप्रक्रियाऽतीतानागतसूक्ष्मविप्रकृष्टादिसकलदर्शनसमर्थैरपि मन्वादिभिरुपलब्धेत्यनुमीयते तत्प्रतिपादनाभावहेतुना । अनुपलब्धेश्च तदप्रामाण्यं ज्वनिकाविहीनमेव ॥

---

(द्वितीयं योगप्रत्युक्त्यधिकरणम्)

"एतेन योगः प्रत्युक्तः ३"

योगस्मृतिः प्रमाणं सा प्रणीता विधिना यतः ।
न प्रमाणं विधेश्चापि दोषजभ्रान्तिसम्भवात् ॥

ननु मा भूत साङ्ख्यस्मृतेः प्रामाण्यं योगस्मृतेस्तु युक्तं प्रामाण्यं तत्रेश्वरस्यापि स्वीकारात् । तस्याश्च वक्ता पितामहो विधिर्हिरण्यगर्भः स किल सर्ववेदान्तप्रवर्तनाधिकृतः, न हि तस्मादधिकः कोपि मुनिस्तत्समो वा येन तदनुरोधेन तत्स्मृतिप्रामाण्यनिर्बन्धाद् योगस्मृतिरप्रमाणं स्यात् । सिद्धे च प्रामाण्ये तदानुगुण्येनैव वेदान्तोपबृंहणं न्याय्यमिति निमित्तकारणमीश्वर उपादानं तु प्रपञ्चस्य प्रधानमेवेति सिद्धम् ।

अत्रोच्यते न प्रमाणमिति । विधिरपि जीव एवेति संभवति तस्यापि रजस्तमोलक्षणदोषजा भ्रान्तिरिति भ्रान्तिनिर्मिता योग स्मृतिरिति न तस्याः प्रामाण्यम् । यदि हि परमेश्वरो निमित्तकारणमेव तदैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः स्फुट एव यत उपादानज्ञानादेव तत्कार्यवर्गविज्ञानं संभवति, जडं प्रधानं तु न चेतनवर्गस्य कारणमिति प्रधानविज्ञानेनापि चेतनविज्ञानं न संभवति परमेश्वरस्तु नोपादानकारणं तव मते येन तद्विज्ञानाच्चेतनविज्ञानं संभवेत् । तस्मात्परमेश्वर एवोपादानं सकलप्रपञ्चस्य निमित्तकारणं चेति तद्विज्ञानेन सर्वविज्ञानं स्पष्टमेव युक्तम् । ततश्च ब्रह्मप्रतिपादिकानामेव स्मृतीनां प्रामाण्यम् ॥

---

(तृतीयं विलक्षणत्वाधिकरणम्)

"न विलक्षणत्वादस्य तथात्वं च शब्दात् ४ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ५ दृश्यते तु ६ असदिति चेन्न प्रतिषेधमात्रत्वात् ७

अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ८ न तु दृष्टान्तभावात् ९
स्वपक्षदोषाच्च १० तर्काप्रतिष्ठानादपि ११ अन्यथानुमेय-
मिति चेदेवमप्यनिर्मोक्षप्रसङ्गात् १२"

उपादानं प्रपञ्चस्य प्रधानं ब्रह्म वा मतम् ।
प्रधानं कार्यसादृश्यादसादृश्यान्न तत् परम् ॥
उपादानं परं तत्र माक्षिकादिनिदर्शनम् ।
कार्यकारणभावस्य वैलक्षण्येपि दर्शनात् ॥

अपरिणामित्वेन चतुर्थपादसप्तमाधिकरणे ब्रह्मोपादानकारणत्व-माशङ्क्य संप्रति प्रपञ्चपरमात्मनोरसादृश्यात्तस्योपादानकारणत्व-माशङ्कते न विलक्षणत्वादित्यादिना योगीश्वरः—उपादानत्वं हि कार्य-सदृशस्यैव भवति यथा घटं प्रति मृदोन्यथा कुलालस्याप्युपादानत्वं स्यात् । प्रपञ्चस्य हि प्रत्यक्षमेवाचेतनत्वाशुचित्वादयो धर्मा उप-लभ्यन्ते येषां कालत्रयेपि परमात्मनान्वयनीतिर्नास्ति त्वया हि तस्य चेतनत्वं सकलदोषरहितत्वं च प्रतिपाद्यते । श्रूयते च "विज्ञानं चा-विज्ञानं च" इत्यादिना परमात्मप्रपञ्चयोर्महद्वैलक्षण्यं न हि विलक्ष-णस्योपादनत्वं संभवतीति प्रपञ्चसादृश्यात्तस्य प्रधानमेवोपादानम् । परमात्मा तु निमित्तकारणमेव । न च वाच्यम्–श्रुत्या प्रपञ्चस्य परमात्मैककारणत्वेऽध्यवसिते प्रपञ्चे चैतन्यानुवृत्तिरभ्युपगन्त-व्येति, अनुपलब्धिपराहतत्वात् । न हि कस्य चिदपि घटादिषु चे-तनत्ववित्तिः । "तं पृथिव्यऽब्रवीत्" इत्याद्यास्तु श्रुतयो न पृथिव्यादि-स्वरूप निबन्धनाः किन्तु तदधिष्ठातृदेवतानिबन्धना देवतनां चेत-नत्वात्सम्भाषणश्रुतौ न कापि विरोधः ।

अत्राभिधीयने–उपादनं परमिति, परं ब्रह्मैव प्रपञ्चस्योपादानं न प्रधानं तन्निरपेक्षमित्यर्थः । विलक्षणयोः कार्यकारणभावो न भवतीति न वक्तव्यम्–विलक्षणादेव माक्षिकादेः कृम्याद्युत्पत्तिदर्श-नात् । विलक्षणादेव गोमयाद् वृश्चिक उत्पद्यते । न च वाच्यम्–तत्र न विलक्षणमात्मानं प्रति गोमयस्य कारणत्वं शरीरं प्रत्येव कारणत्वं तत्सलक्षणत्वमेव गोमयस्येति, न हि वृश्चिकशरीरसालक्षण्यं सर्व-त्मना गोमयेस्ति रुधिरमांसादिमयं शरीरं सर्वथा तद्विलक्षणं गोम-

यमन्यथा तस्य शुद्धिकारणत्वमेव न स्यात्पञ्चगव्यादिप्रणाड्या । तस्मात्परं ब्रह्मैव प्रपञ्चोपादानम् । यदि विलक्षणं सद्ब्रह्मोपादानं तदा विलक्षणस्यासत एव प्रपञ्चस्योत्पत्तिर्वक्तव्या तथा चासत्का-र्यवादः प्रसक्त इति चेन्न—सलक्षणयोरेव कार्यकारणभावो भवतीति नियमः परिहृतो—दृश्यते त्विति सूत्रेण न तु कारणात्कार्यस्य द्रव्या-न्तरत्वमपि परिहृतम्। तस्माद्ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परि-णमते यथा गोमयं स्वविलक्षणवृश्चिकाकारेण । न चैवं प्रपञ्चगता दोषा परमात्मनि प्रादुःष्युरिति वाच्यम्—यथा शरीरगतदोषाणामा-त्मनि प्रसक्तिर्नास्ति तथा प्रपञ्चगतानामपि दोषाणां निरस्तनिखिल-दोषे परमात्मनि प्रसक्तिर्नास्ति। अपौरुषेयवेदनिवेद्यार्थे च तर्कसन्धानं तु नोचितं प्रतिपुरुषं बुद्धिभेदेन भिन्नभिन्नतर्कानुसन्धानेन तर्काणाम-प्रतिष्ठानात् ॥

---

( चतुर्थं शिष्टापरिग्रहाधिकरणम् )

"एतेन शिष्टाऽपरिग्रहा अपि व्याख्याताः १२"

साङ्ख्यपक्षनिरासस्य नयेनान्यनिरासनम् ।
स्वबुद्ध्या भावनीयं भो तर्कस्य ह्यनवस्थितेः ॥

अनेनैव साङ्ख्यपक्षनिरासन्यायेनान्येषामपि वेदपरिग्रहहीनानां वेदतात्पर्यानभिज्ञानां मतानि निरस्तानि वेदितव्यानि ॥

---

( पञ्चमं भोक्त्रापत्त्यधिकरणम )

"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत १३"

चिदचिन्मिश्रलोकस्य ब्रह्मकायत्वमेव चेत् ।
सकायत्वेन भोगःस्याद् दुःखादेस्तस्य जीववत् ॥
तत् प्रधानमुपादानं प्रपञ्चस्येति मन्यताम् ।
कर्माऽसम्बन्धतो नैवं राजाद्यत्र निदर्शनम् ॥

ननु यदि चिदचिन्मिश्रः सकलः प्रपञ्चः परमात्मशरीरं तदा परमात्मनोपि जीववत् सुखदुःखादिभोक्तृत्व स्यात् सशरीरत्वात्

श्रूयते च "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति" तथा च जीवापेक्षया किमाधिक्यं ब्रह्मणि स्यात्? न स्यादिति सांसारिकं ब्रह्म सञ्जातमिति दोषात् प्रधानमेव प्रपञ्चोपादानकारणं ब्रह्म तु निमित्तकारणमिति प्राप्तम् ।

अत्रोच्यते कर्मेति । दुःखादिभोक्तृत्वे न सशरीरत्वं प्रयोजकं किंतु पुण्यापुण्यलक्षणं कर्म, अन्यथा तव मतेपि शरीरसम्बन्धेनैव बुद्धेः कर्तृत्वं भवतीति शरीरसम्बन्धेन पुरुषस्यापि कर्तृत्वं स्यान्नचैवं मन्यते त्वया पुरुषे कर्तृत्वास्वीकारात् । तथा च भोक्तृत्वप्रयोजककर्मसम्बन्धाभावान्न ब्रह्मणो भोक्तृत्वापत्तिः । "न ह वै सशरीरस्य" इति शरीरपदं कर्ममूलकशरीरपरं विज्ञेयम् । यथा हि राजभृत्ययोरुभयोरपि सशरीरत्वे समानेपि राजनिर्दिष्टदण्डानुभवजन्यो दुःखभोगो भृत्यस्यैव न राज्ञस्तथात्रापि विज्ञेयमित्याह राजेति । तथा च दुःखादिभोक्तृत्वाऽभोक्तृत्वाभ्यां निरुपाधिकसुखैकतानताऽभावसद्भावाभ्यां सिद्धं जीवब्रह्मणोर्वैलक्षण्यमपि । तस्माच्चिदचिन्मिश्रप्रपञ्चशरीरकमेव ब्रह्म, तदेव च स्वशरीरभूतप्रपञ्चस्योपादानकारणं तद्रूपेण परिणामादिति सिद्धम् । उपादानत्वात्परमात्मनः प्रपञ्चपरमात्मनोरनन्यत्वमपि सिद्धं तथा चैकविज्ञानेन सर्वविज्ञप्तिप्रतिज्ञादयोप्युपपन्ना भवन्ति ॥

---

( षष्ठमारम्भणाधिकरणम् )

"तदनन्यत्वमारम्भणशब्दादिभ्यः १५ भावे चोपलब्धेः १६
सत्त्वाच्चापरस्य १७ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण
वाक्यशेषाद् युक्तेः शब्दान्तराच्च १८ पटवच्च १९
यथा च प्राणादिः २०"

अन्यत्वं वाप्यनन्यत्वं प्रपञ्चस्य परात्मनः ।
समयाकारसङ्ख्यानां कार्याणां बुद्धिशब्दयोः ॥
कार्यकारणयोर्भेदादन्यत्वं तर्कतो मतम् ।
आरम्भणादिशब्देभ्योऽनन्यत्वं वेदलोकयोः ॥

ब्रह्मकारणवादोऽयमस्मान्नैव समञ्जसः, ।
अधिकं भेदनिर्देशाद् ब्रह्म तस्मान्नदुष्टता ॥

प्रपञ्चस्य कृष्णात् परमात्मनो यद्यनन्यत्वं तदा प्रपञ्चान्तर्गतत्वेन तत्त्वमस्यादिश्रुतिभिर्विशेषतश्च जीवस्यापि परमेश्वरादनन्यत्वमुक्तं भवति स्वीक्रियते च, तथा च हिताकरणादिदोषप्रसक्तिर्दृश्यते परमात्मनि, जीवो हि परमात्माऽभिन्नः परमात्मा च सर्वतन्त्रस्वतन्त्र इति हितरूपमेव जगत् कुर्यान्न कदाप्यहितरूपम् । कथं हि स्वाभिन्नस्य जीवस्य महारौरवकटाहेषु पाकं सहेत ब्रह्म ? । तस्मादसमञ्जसोयं ब्रह्मकारणवाद इतिप्राप्ते-

अभिधीयते-अधिकमिति । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्" "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादिश्रुतिभिर्भेदनिर्देशाज्जीवापेक्षयाधिकमर्थान्तरं ब्रह्म। यथा ह्यचिद्वर्गस्य परमात्मस्वरूपैक्यं नोपपद्यते तथैव चेतनस्यापि दुःखैकभागधेयस्य परमात्मस्वरूपैक्यं नोपपद्यते तस्मान्नोक्तदोषः । प्रपञ्चोपादानस्यापि परमात्मनो जीवदुःखसम्बन्धो न भवति जीवान्तर्यामित्वाद् यथा कायगतं दुःखं जीवात्मनं न स्पृशति तथा। नचैतावता भेदवादानुमतिरभिमन्तव्या सकलचिदचिद्वर्गस्य परमात्मतोऽभिन्नत्वात् ॥

---

(अष्टममुपसंहारदर्शनाधिकरणम्)

"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २४ देवादिवदपि लोके २५"

कारकव्रातसाहित्यात् कुलालादेर्हि कर्तृता ।
सदेवेत्यादिवाक्यैस्तु निस्सहायं प्रतीयते ॥
ततश्च ब्रह्मणो नैव स्रष्टृत्वमुपपद्यते ।
क्षीरदध्यादिदृष्टान्तैः स्रष्टृत्वमुपपद्यते ॥

लोके हि कुलालस्य दण्डचक्रचीवराद्यनेककारककलापसाहाय्येन घटस्रष्टृत्वं दृष्टमिति ब्रह्मणोपि कारककलापसाहाय्येनैव प्रप-

ञ्चस्त्रष्टृत्वं वक्तव्यं न च तस्य कारककलापसाहाय्यमुपलभ्यते "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतिभिः प्रपञ्चात्पूर्वं तत्कैवल्यनिरूपणात्। तस्मात्परमात्मनः स्रष्टृत्वं नोपपद्यते—

इत्युपपाद्यते—क्षीरेत्यादिना। यथा क्षीरस्य दधित्वसम्पत्तौ नान्यकारककलापापेक्षास्ति यथा च जलस्य हिमभावसम्पत्तौ नान्यकारणकलापापेक्षास्ति तथा परमात्मनोऽपि प्रपञ्चपरिणामे नान्यापेक्षास्ति। मन्ये निमित्तकर्तारं कुलालादिकमुपलक्ष्य भ्रान्तोऽसि यदि परमात्मा निमित्तकारणं स्यात्तदा युक्तं स्यात्ते चोद्यं नैवमस्ति क्षीरादिवदुपादानकारणत्वस्वीकारादित्युपपद्यते परमात्मनः स्रष्टृत्वम्॥

---

( नवम कृत्स्नप्रसक्त्यधिकरणम् )

"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा २६ श्रुतेस्तु शब्दमूलत्वात् २७ आत्मनि चैवं विचित्राश्च हि २८ स्वपक्षदोषाच्च २९ सर्वोपेता च तद्दर्शनात् ३० विकरणत्वान्नेति चेत्तदुक्तम् ३१"

परिणामः प्रपञ्चश्चेत् कृत्स्नस्य परिणामिता।
शुद्धाभावोंऽशतश्चेत्स्यान्निरंशत्वस्य संक्षतिः॥
अर्थेषु श्रुतिमूलेषु तर्कस्यानवकाशतः।
विचित्रशक्तियोगेन सर्वं ब्रह्मणि युज्यते॥

ननु यदि प्रपञ्चरूपेण ब्रह्म परिणमते तदा कृत्स्नस्य ब्रह्मणः परिणामः स्यादिति शुद्धस्वरूपाभाव एव स्यात्। तथा च तस्य नियन्तृत्वमपि न स्यात् शुद्धस्यैव नियन्तृत्वात्। यद्यंशतः परिणमते केन चिदंशेन जीवरूपतया केनचिदंशेन प्राकृतरूपतया ततो निरंशत्वं हीयेत श्रूयते च "एकमेवाद्वितीयम्" इत्यादौ निरंशत्वम्।

अत्रोच्यते—अर्थेष्विति। श्रौतार्थेषु तर्कस्यावकाश एव नास्ति येनोक्तचोद्यमुत्पद्येत। तदुक्तम्—"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" किं च विचित्रशक्तिमति परमात्मनि सर्वमुपपद्यते। श्रूयते च "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति। तस्मा-

न्निरंशस्यापि परिणामे न कोपि दोषः । प्रत्युत प्रधानस्यैव निरवयवस्य स्वतन्त्रस्य महदाद्याकारेण परिणामो न सम्भवति प्रधाने विचित्रशक्तियोगाश्रवणात् ॥

---

(दशमं प्रयोजनवत्त्वाधिकरणम्)

"न प्रयोजनवत्त्वात् ३२ लोकवत्तु लीलाकैवल्यम् ३३ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ३४ न कर्माविभागादिति चेन्नाऽनादित्वादुपपद्यते चाप्युपलभ्यते च ३५ सर्वधर्मोपपत्तेश्च ३६"

प्रयोजनविहीनस्य स्रष्टृत्वं नोपपद्यते ।
वैषम्यं निर्दयत्वं च विषमसृष्टितो भवेत् ॥
अवाप्ताखिलकामस्य स्रष्टृत्वं लीलया मतम् ।
सृष्टिस्तु सृज्यमानानां कर्मापेक्षणतस्तथा ॥

ननु सर्वशक्तियोगादुपपद्यते परमात्मनः स्रष्टृत्वं तथापि "प्रयोजनमनुद्दिश्य मन्दोपि न प्रवर्तते" इति न्यायाद् महति सृष्टिकार्ये प्रयोजनमनुद्दिश्य प्रवृत्तिरेव न संभवति न च परमात्मनः सप्रयोजनत्वसंभावनास्ति, अवाप्तसमस्तकामत्वात् । यदि जीवप्रयोजनेन सृष्टिरुच्येत तदा जीवानुग्रहाय सृष्टिर्वक्तव्या न हि स्वनिग्रहप्रयोजनवत्त्वं जीवस्यापि संभवतीति जीवप्रयोजनानुकूल्येन सुखप्रदैव सृष्टिरभविष्यत् न दुःखमयी जराजन्ममरणादिना ।

इत्यत्रोच्यते अवाप्तेति—अवाप्तसमस्तकामस्यापि लीलया सृष्टिः संभवति यथा भूमिपालानामायासप्रदापि कन्दुकादिक्रीडा भवति लीलार्थं तथा । ननु सृष्टौ केचिद्दुःखिनो मादृशा जना केचित् सुखिनस्त्वादृशा जना इति सृष्टिवैषम्यात्परमात्मनि वैषम्यं स्यात् । दुःखप्रदत्वेन निर्दयत्वं च स्यादत्राह सृष्टिस्त्विति सृष्टिर्हि सृज्यमान जीवानां कर्मापेक्षा भवतीति न परमात्मनो वैषम्यं नैर्घृण्यं वा । सुकृतिनः सुखिनः सन्ति दुष्कृतिनो दुःखिनः सन्तीति कोत्र परमात्मापचारः? । तस्मात्सर्वं सुसंपन्नम् ॥

॥ इति पञ्चमः पादः समाप्तः ॥

# अथ द्वितीयाध्यायस्य द्वितीयः पादः ।

(प्रथमं रचनानुपपत्त्यधिकरणम्)

"रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च १ पयोम्बुवच्चेत्तत्रापि २ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ३ अन्यत्राभावाच्च न तृणादिवत् ४ पुरुषाश्मवदिति चेत्तथापि ५ अङ्गित्वानुपपत्तेश्च ६ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ७ अभ्युपगमेऽप्यर्थाभावात् ८ विप्रतिषेधाच्चासमञ्जसम् ९"

उत्पत्तिः प्रकृतेस्तत्र लयश्च जगतां मतः ।
दुःखमोहसुखात्मत्वादुभयोस्तुल्यता यतः ।
प्रधानस्य स्वतन्त्रस्य प्रवृत्तिः स्यात्पयोम्बुवत् ।
जडायाः प्रकृतेर्नैवं प्रवृत्त्याद्युपपद्यते ॥

कृत्स्नस्य प्रपञ्चस्यैकमेव कारणमवश्याभ्युपगन्तव्यमन्यथा क्वचिदपि कारणत्वस्थितिर्नस्यात् परमाणूनामपि स्वावयवेभ्य उत्पत्तिस्तेषामपि स्वावयवेभ्य इत्यनवस्थानात् । वेदान्तिमतप्रसिद्धं ब्रह्मापि निरस्तनिखिलहेयगन्धं सुखदुःखमोहात्मकस्य प्रपञ्चस्य कारणं न भवितुमर्हति सदृशयोरेव भवितव्यं कार्यकारणभावेन न हि मृद्घटस्य सुवर्णं कारणमिति कस्य चिन्मतिर्भवति तत्कस्य हेतोः? मृद्घटापेक्षया विलक्षणत्वात्सुवर्णस्य । तथा च जगतां = प्रपञ्चस्य सुखदुःखमोहात्मकस्य सुखादिकारणीभूतगुणत्रयसाम्यावस्थालक्षणायाः प्रकृतेरेवोत्पत्तिर्युक्ता तत्रैव च लय इति । न च वाच्यम्—चेतनानधिष्ठातायाः प्रकृतेः प्रवृत्तिरेव न संभवति येन कारणत्वं स्यादिति पयोम्बुवदुपपत्तेर्यथा क्षीरस्य चेतनानधिष्ठितस्यापि दधिभावेन परिणामलक्षणा प्रवृत्तिरुपपद्यते यथा च वारिदविमुक्तस्य जलस्य स्थानभेदेन चेतनानधिष्ठितस्यापि तत्तत्फलरसाद्याकारेणपरिणामरूपा प्रवृत्तिरनुभूयते तथा जडस्य प्रधानस्यापि चेतनानधिष्ठित-

स्यापि महदाद्याकारेण परिणामलक्षणा प्रवृत्तिरुपपद्यते न कोपि दोषः ।

अत्राभिधीयते—जडाया इति, जडायाः प्रकृतेरेवं स्वातन्त्र्येण न प्रवृत्त्याद्युपपद्यते । न हि जडाया मृत्तिकायाः कुलालाधिष्ठानं विना घटाकारेण परिणामः संभवति । किं च साम्यावस्थानां सत्त्वादीनामनेकानां कारणत्वाभ्युपगमात् परमाणुकारणवाद इवात्राप्यनेककारणत्वं दुर्निवारमेव । क्षीरादीनामपि दध्याद्याकारपरिणामे चेतनाधिष्ठितत्वमपेक्षितमेवेति दुष्टं निदर्शनम् । तृणादीनामपि गवादिभक्षितानामेव क्षीराकारेण परिणामोस्ति यदि स्वातन्त्र्येण परिणामः स्यात्तदा बलीवर्दभक्षितानामपि क्षीराकारेण परिणामः स्यात् । तस्मात् परमपुरुषाधिष्ठितमेव प्रधानं महदाद्याकारेण परिणमते तच्च प्रधानं परमपुरुषपरिणाम एव तस्मिन् भगवति विचित्रशक्तियुक्ते सर्वमसंभावितमप्युपपद्यते । तस्मात्परमात्मत एवोत्पत्तिस्तत्रैव च लयः प्रपञ्चस्य । तथैव श्रूयते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इत्यादि ॥

---

(द्वितीयं महद्दीर्घाधिकरणम्)

"महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् १० उभयथा न कर्मातस्तदभावः ११ समवायाभ्युपगमाच्च साम्यादनवस्थितेः १२ नित्यमेव च भवात् १३ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् १४ उभयथा च दोषात् १५ अपरिग्रहाच्चात्यन्तमनपेक्षा १६"

परमाणुचयेनापि नोत्पत्तिर्जगतां मता ।
प्रेरकस्यानिरूप्यत्वादनवस्थादिदोषतः ॥

तार्किकमहाशयैः परमाणूनामेव प्रपञ्चोपादानत्वमुच्यते युक्तमेवैतत्स्थूलदर्शिनाम् । तर्केणैव चेद्विचारणीयं तदा सर्वं स्वावयवारब्धमुपलभ्यत इति परमाणुभिरपि स्वावयवारब्धैर्भवितव्यं तथा तैरपि स्वावयवारब्धैरिति क्वचिदपि कारणताविश्रान्तिर्न स्यादित्यनवस्था प्राप्ता । यदि श्रद्धाजाड्येन स्वावयवारब्धत्वव्याप्तिं परित्यज्य

परमाणुषु कारणताविश्रान्तिरभ्युपगम्यते तदा वेदान्तवेद्ये परमात्मन्येव किमिति कारणताविश्रान्तिर्नाभ्युपगम्यते। अन्यथा विनिगमनाविरहात् परमाणुष्वपि कारणताविश्रान्तिर्नस्यादेवं केनापि त्रसरेणुष्वपि कारणताविश्रान्तिरभ्युपगम्येत। परमाणूनां च सावयवत्वाभावेन तेषां संयोगाद् द्व्यणुकाद्युत्पत्तिरेव न संभवति। किं चाणुत्वं द्व्यणुकेऽप्यस्ति कृतं परमाणुस्वीकारेण।

विलक्षणमिदमुच्यते यत्प्रथममहत्त्वं प्रति सङ्ख्यैवकारणमणुपरिमाणस्य कारणत्वाभावात्। एवं सर्वत्र सङ्ख्यैव परिमाणं प्रति कारणं स्यात्। किं च परमाणुसंयोगकारणीभूतस्पन्दं प्रति जीवादृष्टं कारणमुच्यते अदृष्टानां च परमाणुगतत्वं न संभवति परमाणूनां जडत्वात्। जीवगतादृष्टानां च कथं परमाणुसंयोगकारणीभूतस्पन्दं प्रति कारणत्वं स्यादन्यथा देवदत्तसमवेतादृष्टानां यज्ञदत्तसमवेतसुखादिकारणत्वमपि स्यात्। यदि च जीवपुण्यपापानुष्ठानजन्यादृष्टानां परमाणौ समवायस्तदा सर्वदोत्पादकत्वप्रसंगः। जीवस्य चादृष्टसम्बन्धरिक्तत्वात्सुखदुःखादिभोगभाजित्वं न स्यात्। यदि केषां चिददृष्टानां परमाणौ समवायः केषां चिच्च जीव इत्युच्यते तदापि केषामदृष्टानां क समवायः स्यादिति विनिगमनाविरहः। सृष्टिकारणीभूतानां जीवादृष्टानां परमाणौ समवायो यद्युच्यते तदापि केषामदृष्टानां सृष्टिकारणत्वमिति विनिगमनाविरहः।

अदृष्टानां–स्थितिश्च समवायसम्बन्धेनोच्यते समवायस्यापि सम्बन्धान्तरेणेत्यनवस्थादोषः। समवायश्च नित्य उच्यते सम्बन्धनित्यत्वं सम्बन्धिनित्यत्वाधीनमित्यदृष्टानां नित्यत्वेऽदृष्टप्रेरितपरमाणुसंयोगानां नित्यत्वेन प्रपञ्चनित्यत्वापत्तिर्न चेष्टापत्तिरपि। रूपादिमत्त्वात्पटादीनामनित्यत्वव्याप्तेः परमाणूनामप्यनित्यत्वं विनाशित्वं च स्याद्रूपादिमत्त्वात्। यदि रूपादिहीनाः परमाणवस्तदा घटादौ रूपाद्युपलब्धिर्न स्यात् कार्यगुणानां कारणगुणपूर्वकत्वस्वीकारात्। किं बहुना सर्वात्मना वेदान्तबहिर्भूतोयं दोषैकभूमिरापातरमणीयः परमाणुकारणवादस्तन्नामग्रहणयोग्योऽपि नास्तीत्युपरम्यते॥

---

(तृतीय समुदायाधिकरणम्)

“समुदाय उभयहेतुकेऽपि तदप्राप्तिः १७ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् १८ उत्तरोत्पादे च पूर्वनिरोधात् १९

"असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २० प्रतिसङ्ख्याप्रति-
सङ्ख्यानिरोधाप्राप्तिरविच्छेदात् २१ उभयथा च दो-
षात् २२ आकाशे चाविशेषात् २३ अनुस्मृतेश्च २४
नासतोऽदृष्टत्वात् २५ उदासीनानामपि
चैवं सिद्धिः २६"

दुष्टे क्षणिकवादेपि परमाणुपरिग्रहः ।
जगतः कारणत्वेन, ह्युक्तयुक्त्यात्र दुष्टता ॥
क्षणिकत्वं च भावानां कथं चिन्नोपपद्यते ।
अविद्यादेर्न हेतुत्वमित्यादि स्वयमूह्यताम् ॥

परमाणुकारणवादाविशेषात्सौगतनिराकरणसमयोयम् । द्वि-विधाः सौगता बाह्यार्थास्तित्ववादिनः सर्वशून्यवादिनश्च । बाह्या-र्थास्तित्ववादिनां वादेपि परमाणूनामेवोपादानकारणत्वं तच्चोक्तयु-क्त्यैव निरसनीयम् । प्रपञ्चितं चैतत्पूर्वाधिकरणे । क्षणिकत्वं च तैर्भावानां परमाण्वादीनामुच्यते संहितैश्च परमाणुभिः पृथिव्यादेरु-त्पत्तिरभिधीयते तत्र क्षणविनाशिनां परमाणूनां परस्परं संहतिरेव कथं स्यादिति महत्यनुपपत्तिः । क्षणिकानां च विज्ञानविषयत्वमपि नोपपद्यते यद्विषयेणेन्द्रियसंयोगे ज्ञानमुत्पन्नं स तु तस्मिन्नेव क्षणं नष्टः, तदिन्द्रियसंयोगोत्पन्नं च ज्ञानं नान्यं विषयीकर्तुमर्हत्यन्यथा घटेन्द्रियसंयोगोत्पन्नेन ज्ञानेन पटोपि विषयी क्रियेत ।

नन्वविद्यया क्षणिकानामपि भावानां स्थिरत्वेन ग्रहणात् तज्ज्ञान-मुपपद्यते नष्टाद्भिन्नोपि विषयोऽविद्यया नष्टात्मत्वेन गृह्यते यथा स एवायमिति प्रत्यभिज्ञायाम् । तथा चाविद्यया स्थिरत्वादिगोचराः संस्कारा उत्पाद्यन्ते तैश्च चित्ताभिज्वलनरूपं विज्ञानं ततश्च पृथिव्या-दिकमित्यविद्यया सर्वमुपपद्यत इति चेन्न–अविद्यादीनां भूतभौतिक-सङ्घातभावं प्रत्यकारणत्वात् । अस्थिरे स्थिरत्वबुद्धिलक्षणा ह्यविद्या स्थिरत्वग्रहणे हेतुर्भवति न तेषां परस्परसंहतौ,अन्यथा शुक्तिरजतग्रा-हिकयाऽविद्यया शुक्तेरपि केनापि संहतिः स्यात् । किं च पूर्वक्षणस्य

विनष्टस्योत्तरक्षणं प्रति कथं कारणता स्यात्। अभावस्य च हेतुत्वे सर्वं सर्वत्र सर्वदा चोत्पद्येत। यदि पूर्वक्षणवर्तित्वमात्रं हेतुस्तदा घटक्षणेनैव सर्वोत्पत्तिप्रसङ्गः। यदि सजातीयं प्रत्येव हेतुत्वं तदाप्येकबीजक्षणेन सकलाङ्कुरोत्पत्तिः प्रसक्ता। इत्यादयो बहवो दोषाः सन्ति ते स्वयमूह्याः कृतमत्र तेषां साकल्येन निदर्शनेन यतोऽस्य सन्दर्भस्याधिकरणयोजनैव प्रयोजनम॥

---

(चतुर्थमुपलब्ध्याधिकरणम)

"नाभाव उपलब्धेः २७ वैधर्म्याच्च न स्वप्नादिवत् २८
न भावोनुपलब्धेः २९"

ज्ञानमेवार्थरूपेण परिणाम्याऽऽकृतिं गतः।
नान्यथा तत्प्रकाशः स्यात्तस्माद् बाह्यं न विद्यते॥
उपलब्ध्यास्ति बाह्यं भो ज्ञानासिद्धेश्च तद्विना॥

विज्ञानवादी योगाचारः प्रत्यवतिष्ठते—बाह्यप्रकाशाय ज्ञानमवश्यमभ्युपगन्तव्यं तथा च विज्ञानेनैव सर्वोपपत्तेः कृतं बाह्यपदार्थस्वीकारेण, ततश्च विज्ञानमेव बाह्याकारेण परिणमते साकारत्वात्। तव मतेपि विज्ञानं प्रकाशत एव प्रकाशश्च निराकारस्य नैव संभवतीत्याह नान्यथेति साकारत्वं विनेत्यर्थस्तस्मात् साकारस्य विज्ञानस्य बाह्याकारेण परिणामे काप्यनुपपत्तिर्नास्ति यदि बाह्यं स्यात्तदा विज्ञानाऽसत्त्वकालेप्युपलभ्येत न चोपलभ्यते तस्मान्नास्ति बाह्यम्।

अत्रोच्यते उपलब्ध्यास्तीति—यद्यपि विज्ञानासत्त्वकाले बाह्यं नानुभूयते तथापि विज्ञानसत्त्वकाले विज्ञानाद् भेदेन बाह्यमनुभूयत एव। अन्यो गौरिति शब्दः, अन्यद्गौरिति ज्ञानम्, अन्यो गौरिति विषय-इत्येवं शब्दज्ञानविषयाणां भेदस्याऽऽपामरप्रसिद्धेः। किं च ज्ञानं हि सकर्तृकं सकर्मकं चेति बाह्यमपि तस्य कर्मेति बाह्यविज्ञानसिद्धिरेव न संभवति बाह्यं विना। ननु स्वप्नज्ञानं विषयं विनैव स्वसत्तां लभत इति चेन्न प्रत्यक्षाभासत्वात्तस्य निद्रादिदोषजन्यत्वात्। अन्यथा स्वप्नज्ञानोपलब्धविषयस्य कार्यकारित्वं स्यात्। तस्मादस्ति बाह्यम्। यदि

बाह्यं वस्तु न स्यात्तदा घटज्ञानशुक्तिरजतज्ञानयोः किमिति विशेषः स्यादस्ति च विशेषो भ्रमत्वाभ्रमत्वरूपः । भ्रमाभावश्च विषयसत्त्वनिबन्धन एव तस्मात्सिद्धमस्ति बाह्यमिति ॥

---

(पञ्चमं सर्वथानुपपत्त्यधिकरणम्)

"सर्वथानुपपत्तेश्च ३०"

शून्यमेव पराकाष्ठा मोक्षश्चाकृतकत्वतः ।
सत्त्वं प्रतीयते भ्रान्त्या, नोपपत्तेरभावतः ॥

शून्यवादी माध्यमिकः प्रत्यवतिष्ठते–शून्यमेव परमार्थस्तस्याकृतकत्वाच्छून्यमेव मोक्षः । कृतकस्य कस्य चिन्मोक्षत्वस्वीकारे मोक्षानित्यत्वं स्याद् घटादिवत् । यदि पदार्थानामुत्पत्त्यादिकं निरूपयितुं शक्येत तदा तेषां सत्त्वमपि स्यान्नचैवमस्ति तथा हि–न हि घटस्य भावादुत्पत्तिरस्ति मृत्पिण्डोपमर्देनैव घटोत्पत्तेरन्यथा घटकालेपि मृत्पिण्ड उपलभ्येत । न चाप्यभावात्–अभावादुत्पन्नो घटोऽभावरूप एव स्यात् । किं च स्वत उत्पत्तौ स्वात्माश्रयो दोषः । परतश्चोत्पत्तौ परत्वाविशेषात्सर्वं सर्वस्मादुत्पद्येत । तस्माच्छून्यमेव तत्त्वं सत्त्वं तु भ्रान्त्या प्रतीयते ।

अत्रोच्यते–नोपपत्तेरभावत इति । सर्वशून्यत्वस्योपपत्तिरेव नास्तीत्यर्थः । येन प्रमाणेन शून्यत्वं साध्यते तस्यापि शून्यत्वे तस्य साधकत्वं न स्याद् यदि तस्य साधकत्वसमर्थनाय सत्त्वं स्वीक्रियते तदा सर्वशून्यवादभङ्गः । किं च सर्वस्य शून्यत्वे घटादीनां शुक्तिरजतादीनां विशेषो न स्याद् घटादिवच्छुक्तिरजतादेरपि कार्यकारित्वं स्याच्छून्यत्वाविशेषात् । तस्मादुपपत्तेरभावान्न शून्यत्वं कथमपि सिद्ध्यति सर्वानुभवविरोधात् ॥

---

(षष्ठमेकस्मिन्नसंभवाधिकरणम्)

"नैकस्मिन्नसंभवात् ३१ एवं चात्माकार्त्स्न्यम् ३२ न च पर्यायादप्यविरोधो विकारादिभ्यः ३३ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ३४"

परमाणुमतं जैनमुक्तरीत्या निरस्यताम् ।
अस्तित्वं चापि नास्तित्वमेकत्रैव न युक्तिमत् ॥
वपुःपरिमितिर्जीवः पूर्त्यऽभावान्न युज्यते ।
अविरोधो न पर्यायादनित्यत्वादिदोषतः ॥

जैनैरपि परमाणूनामेव प्रपञ्चोपादानत्वमभ्युपगम्यते तच्च छितीयाधिकरणन्यायेन निरसनीयम्, वैशेषिकमतापेक्षयापि दुष्टमुच्यते जैनैर्यदेकस्वभावेभ्य एव परमाणुभ्य पृथिव्यादिकमुत्पद्यते पृथिव्यादीनां परस्परभेदो हि परिणामकृत इति, एवं हि मृत्पिण्डादेव घटवत्पटोऽप्युत्पद्येत घटपटयोर्विशेषो हि परिणामकृत एव भविष्यति न चैवं संभवति तस्मादयुक्तमिदं मतम् ।

किं च स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादव्यक्तम्, स्यादस्ति चाव्यक्तं च, स्यान्नास्ति चाव्यक्तं च, स्यादस्ति च नास्ति चाव्यक्तं च, इति सप्तभङ्गीनयेन सर्वमनैकान्तिकमुच्यते। तदपि नोपपद्यते एकस्मिन्नेकस्मिन् काले परस्परविरुद्धमस्तित्वं नास्तित्वं च सम्भवति ।

किं च तैर्देहपरिमाणसमानमानोऽसङ्ख्यातप्रदेशो जीव इत्युच्यते तदपि विरुद्धम्, एवं हि दन्तिशरीरावस्थितस्यात्मनः पिपीलिकाकायप्रवेशे ह्यपूर्तिः=अपरिपूर्णता स्यात् सकलावयवैरात्मनःपिपीलिकाकाये प्रवेशोनस्याद् दन्तिदेहान्निर्गस्यात्मनः पिपीलिकाकायापेक्षया पृथुलतरत्वादित्यर्थः । सावयवत्वाच्चानित्यत्वं स्याद्घटादिवदात्मनः । पर्यायात्=संकोचविकासलक्षणावस्थान्तरापत्तेरप्यविरोधो न सम्भवति देहपरिमाणात्मवादे । नाम—तस्यैवात्मनः करिकायप्रवेशे विकासो भवति पिपीलिकाकायप्रवेशे च संकोचो भवतीत्यभ्युपगमेपि विरोधस्तदवस्थ एव, संकोचो विकासश्च विकार एवेति तत्प्रयुक्तमनित्यत्वादिकं प्रसज्यतैवेत्यर्थः ॥

---

( सप्तमं पशुपत्यधिकरणम् )

"पत्युरसामञ्जस्यात् ३५ अधिष्ठानानुपपत्तेश्च ३६ करणवच्चेन्न भोगादिभ्यः ३७ अन्तवत्त्वमसर्वज्ञता वा ३८"

पशुपतेर्मतं हेयं स्पष्टं वेद विरोधतः।
पत्युर्निमित्तहेतुत्वं तर्कान्न ह्युपपद्यते॥

जैनादिमतवत् पशुपतिमतमपि सर्वात्मना हेयमेव वेदविरुद्धत्वात्। चतुर्विधाः पशुपतिवादावलम्बिनः—कापालाः कालामुखाः पाशुपताः शैवाश्चेति, सर्वे चैते वेदविरुद्धराद्धान्तावलम्बिनः। कापालानां मुद्रापत्‌कादिधारणं वेदविरुद्धम्। कालामुखानां कपाल पात्रभोजनादिकं लोकनोपि विरुद्धमशुद्धं च। ते चैते सर्वएवानुमानात्पशुपतिं निमित्तकारणं सङ्गिरन्ते। अनुमानं हि दृष्टानुसारेण प्रसरतीति लोके हि कुलालादीनां सशरीराणामेव निमित्तकारणत्वमुपादानाधिष्ठानं च दृष्टमिति पशुपतेरपि सशरीरस्यैव निमित्तकारणत्वमुपादानाधिष्ठानं चोपपद्येत। न चेष्टापत्तिः सशरीरत्वानभ्युपगमात्। सशरीरत्वाभ्युपगमेपि शरीरं तन्नित्यमनित्यं वा नाद्यः शरीरस्य सावयत्वेपि नित्यत्वे प्रपञ्चस्यापि नित्यत्वं स्यात्। नाप्यनित्य तत्कारणीभूतशरीरान्तरापेक्षायामनवस्थानात्। अनपेक्षायां च कर्तृकर्मविरोधो लोकेपि च घटादिकमन्यानपेक्षमुत्पद्येत। पशुपत्तिः सव्यापारो वा निर्व्यापारो वा नाद्यः—अशरीरस्य सव्यापारत्वविरोधात्। न द्वितीयो निर्व्यापारस्य कर्तृत्वविरोधात्। ननु यथाऽशरीरस्यैर जीवस्य करणकलेवराद्यधिष्ठानमुपलभ्यते तथा पशुपतेरप्यशरीरस्य प्रधानाधिष्ठानं न विरोधावहमिति चेन्न जीवस्य करणकलेवराद्यधिष्ठाने कर्मैव कारणम्। चेत्पशुपतेरपि प्रधानाधिष्ठाने कर्म कारणं तदा सृष्टिसंहारादिदुःखभाजित्वमसर्वज्ञत्वं च स्यादित्ययुक्तं पशुपतिमतम्॥

---

(अष्टमुत्पत्त्यसंभवाधिकरणम्)

"उत्पत्त्यसंभवात् ३९ न च कर्तुः करणम् ४० विज्ञानादिभावे वा तदप्रतिषेधः ४१ विप्रतिषेधाच्च ४२"

मतं भागवतं दुष्टं जीवाद्युत्पत्तिभाषणात्।
ना, ऽविज्ञानेन भावस्य जीवोत्पत्तिनिषेधतः॥

उक्तकापिलादिमतानां निरासप्रक्रमेण कस्य चित्स्थूलदर्शिनः पञ्चरात्रोक्तप्रक्रियायामपि दृष्टिः कुपिता स्यादिति तन्निरासाय शङ्क्यते मतमित्यादिना। "न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिश्रुतिभिर्जीवस्य नित्यत्वमुच्यते, भागवतमते च तस्य नित्यस्यापि जीवस्योत्पत्तिरभिधीयते। यथा परब्रह्मभूताद्वासुदेवात्सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसञ्ज्ञं मनो जायते प्रद्युम्नादनिरुद्धसंज्ञोऽहङ्कारो जायत इति। सङ्कर्षणाज्जीवात्प्रद्युम्नसंज्ञस्य मनसश्चोत्पत्तिर्न सम्भवति "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति परस्मादेव ब्रह्मणो मनस उत्पत्तिश्रवणात्तस्माद् दुष्टम्=अयुक्तं पञ्चरात्रप्रक्रियात्मकं भागवतं मतमितिप्राप्ते—

उच्यते—नाऽविविज्ञानेनेति। भागवतं मतं न दुष्टं भावस्य=तेषां प्रतिपादनभावस्य अविज्ञानेनाविज्ञानात्, भावमविज्ञायैव त्वया दुष्टत्वमुच्यत इत्यर्थः। वासुदेवाख्यं परं ब्रह्मैव स्वलीलया चतुर्धा भवति वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धश्चेति। स्वरूपाद्वासुदेवाख्यादनन्तरं सर्गावस्थादौ सङ्कर्षणरूपपरिग्रहाद् वासुदेवात्सङ्कर्षणो जायत इत्युक्तम्। तदनन्तरं प्रद्युम्नरूपपरिग्रहात्सङ्कर्षणात्प्रद्युम्नो जायत इत्युक्तम्। तदनन्तरमनिरुद्धरूपपरिग्रहात्प्रद्युम्नादनिरुद्धो जात इत्युक्तम्। ब्रह्मात्मकत्वं च सर्वस्य त्वयाप्यङ्गीक्रियते इति को दोषो भागवतमते। किं च तस्मिन्नपि तन्त्रे जीवोत्पत्तिर्निषिद्धैव यथा—"अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते। व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इति। तस्माद्वेदान्तसंमतमिदं भागवतमतम्॥

॥ इति षष्ठः पादः समाप्तः॥



## ॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

---

(प्रथमं वियदधिकरणम्)

"न वियदश्रुतेः १ अस्ति तु २ गौण्यसंम्भवाच्छब्दाच्च ३ स्याच्चैकस्य ब्रह्मशब्दवत् ४ प्रतिज्ञाहानिरव्यतिरेकात् ५ शब्देभ्यः ६ यवाद्विकारं तु विभागो लोकवत् ७ एतेन मातरिश्वा व्याख्यातः ८ असंभवस्तु सतोनुपपत्तेः ९"

**वियदुत्पद्यते नो वा? नाऽमूर्त्तत्वात्तथाऽश्रुतेः ।**
**उत्पद्यते श्रुतेः सत्त्वात्तथैव पवनो मतः ॥**

वेदबाह्यवादनिरासानन्तरं स्वमतदार्ढ्याय तृतीयपादमारभते भगवान् बादरायणो न वियदश्रुतेरित्यादिना । वियदुत्पद्यते न वेति सन्देहः किं युक्तम्? नोत्पद्यते इति । यतः सर्वगतस्य निरवयवस्य कथमिवोत्पत्तिः सम्भवेदन्यथात्मनोप्युत्पत्तिः स्यात् । अश्रुतेश्च सृष्टिप्रकरणे वियदुत्पत्तिः श्रूयतेपि नो । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिषु तु श्रूयमाणा वियदुत्पत्तिर्बाध्यते । किं वात्र गौण्युत्पत्तिः समाश्रीयते तस्मान्न वियदुत्पद्यते । एवं पवनोपि नोत्पद्यते ।

अत्रोच्यते—उत्पद्यते इति । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति स्पष्टतरं वियदुत्पत्तिः श्रूयते न च बाधकाभावे गौणत्वाश्रयणं युक्तम् । तस्मादुत्पद्यते वियत् । एवं मातरिश्वा पवनोप्युत्पद्यते पवेति ज्ञेयम् "आकाशाद्वायुः" इति श्रूयमाणत्वात् ॥

---

(द्वितीयं तेजोधिकरणम्)

"तेजोतस्तथा ह्याह १० आपः ११ पृथिवी १२ अधिकाररूपशब्दान्तरेभ्यः १३ तदभिध्यानादेव तु तल्लिङ्गात्सः १४ विपर्ययेण तु क्रमोत

उपपद्यते च १५ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् १६ चराचरव्यापाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् १७"

उत्पत्तिस्तेजसो वायोस्तेजसोऽपां भुवोम्भसः ।
स्वपूर्वस्माच्छ्रुतेर्जन्म तथैव महदादिषु ।
तदभिध्यानलिङ्गाभ्यां परस्माद्ब्रह्मणो जनिः ॥

तेजःप्रभृतीनां वाय्वादिभ्य उत्पत्तिर्वा परस्माद् ब्रह्मणो वा ? किं युक्तम् ? वाय्वादिभ्य इति, वायोस्तेजस उत्पत्तिस्तेजसोऽपामुत्पत्तिरम्भसोऽद्भ्यो भुवः पृथिव्या उत्पत्तिर्भवति तथैव श्रूयते" आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी" इति, तस्मात् स्वपूर्वस्माज्जन्मोक्तश्रुतेः। तथैव महदादीनामपि स्वपूर्वस्माज्जन्म यथा प्रकृतेर्महान् महतोऽहङ्कार इति । ब्रह्मन उत्पत्तिस्वीकार उक्तश्रुतिबाधः स्यात् ।

अत्रोच्यते तदभिध्यानलिङ्गाभ्यामिति । सर्गारम्भभवं तदभिध्यानं बहुभवनानुकूलः सङ्कल्पः श्रूयते "एकोहं बहुस्याम्" इति तच्च तदभिध्यानं तस्य परमात्मन एव लिङ्गं तस्मिन्नुपपत्तेर्न वाय्वादीनां प्रधानादीनां वा लिङ्गं तेषु बहुभवनसंकल्पस्य बाधात्। तथा च वायुशरीरकात्परस्माद्ब्रह्मणस्तेजं उत्पद्यते, प्रधानशरीरकाच्च महानुत्पद्यत इति परस्माद्ब्रह्मण एव सर्वेषामुत्पत्तिर्वेदान्तसंमता । वायुप्रधानादिशब्दा अपि वाय्वादिशरीरकस्य तस्य परमात्मन एव वाचकाः ॥

---

(तृतीयमात्माधिकरणम्)

"नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः १८"

उत्पत्तिः श्रुतियुक्तिभ्यां जीवस्य वियदादिवत् ।
नित्यत्वाच्छ्रुतिवाक्याच्च नात्मनो जन्म युज्यते ॥

जीवस्योत्पत्तिर्युक्ता न वेति विचार्यते किं युक्तम्? जीवस्योत्पत्तिरस्त्येव तथैव श्रूयते—"यतः प्रसूता जगतः प्रसूतिः । तोयेन जीवान् विससर्ज भूम्याम्" इति । युक्तिरप्यस्ति यदि परस्माद्ब्रह्मणो जीवस्योत्पत्तिर्न स्यात्तदैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा विरुध्येत । किं च "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिः सामान्यतः सकलप्रपञ्चस्योत्पत्तिमभिदधती जीवोत्पत्तिमपि क्रोडी करोति ।

अत्रोच्यते—नित्यत्वादिति । जीवस्य श्रुतेर्नित्यत्वं जन्मरहितत्वं च बोध्यते—"नित्यो नित्यानां चेतनश्चेतनानाम्" "न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे" इति । नन्वेवमेकविज्ञानेन सर्वविज्ञानं कथं स्यादत्रोच्यते जीवस्यापि कार्यत्वात् । हन्तैवमुत्पत्तिः स्वीकृता, नेत्युच्यते यतः कार्यत्वं हि द्रव्यस्यावस्थान्तरापत्तिरेव तज्जीवस्याप्यस्ति ब्रह्मैव जीवस्वरूपं भवतीति सिद्धान्तात् । यथा हि वियदादीनां स्वरूपान्यथाभावलक्षणोत्पत्तिरस्ति तथा जीवस्य नास्तीति स्वरूपान्यथाभावः प्रतिषिध्यते "न जायते" इत्यादिना, न त्ववस्थान्तरापत्तिरपि निषिध्यते येन जीवस्य ब्रह्मकार्यत्वं न स्यात् । तथा च जीवस्याप्युक्तस्वरूपब्रह्मकार्यत्वाद् युक्तमेकविज्ञानेन सर्वविज्ञानम् । "यतः प्रसूता" इति श्रुतिरप्युक्तलक्षणकार्यत्वबोधनपरा । "तोयेन जीवान्" इत्यौपचारिकः सर्गः शरीरसर्गात्, शारीरिकोहि सर्ग आत्मन्युपचर्यते यथा पुनर्जातोस्मीत्यादौ ॥

---

(चतुर्थं ज्ञाधिकरणम्)

"ज्ञोऽतएव १९ उत्क्रान्तिगत्यागतीनाम् २० स्वात्मना चोत्तरयोः २१
नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् २२ स्वशब्दोन्मानाभ्यां च २३
अविरोधश्चन्दनवत् २४ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमा-
द्धृदि हि २५ गुणाद्वा लोकवत् २६ व्यतिरेको गन्धवत्त-
था च दर्शयति २७ पृथगुपदेशात् २८ तद्गुणसारत्वा-
त्तु तद्व्यपदेशः प्राज्ञवत् २९ यावदात्मभावित्वाच्च
न दोषस्तद्दर्शनात् ३० पुंस्त्वादिवत्त्वस्य सतो-

भिव्यक्तियोगात् ३१ नित्योपलब्ध्यनुपल-
ब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ३२"

जीवः किं ज्ञानमात्रं वा ज्ञाता ज्ञानगुणोथ वा, ।
ज्ञानमात्रं श्रुतेर्युक्तं, मैवं निष्फलतेन्द्रिये ॥
ज्ञानाभावात्सुषुप्त्यादौ जीवो ज्ञानगुणस्ततः, ।
सर्वदेहे विभुर्ज्ञानाद् देहमाने विनाशिता, ॥
ज्ञातृत्वं जीवरूपं, नो जाड्यं न ज्ञानमात्रता, ।
उत्क्रमणादिभिश्चाणुर्ज्ञानं चन्दनवच्छ्रुतेः ॥

संप्रति जीवस्वरूपपरिमाणयोर्विचिकित्सा समुपस्थिता—किं जीवो ज्ञानमात्रं किं वा ज्ञानगुणः ( अचित्स्वरूप एवागन्तुकचैतन्यगुणयोगी ) किं वा ज्ञातेति । तत्र कपिलादिराह ज्ञानमात्रं जीवः, कुतः? श्रुतेः—श्रुतिर्हि ज्ञानमात्रत्वमाह जीवस्य यथा—"विज्ञानं यज्ञं तनुते" इति । आत्मशब्दस्थाने विज्ञानशब्दश्च श्रूयते "यो विज्ञाने तिष्ठन्" इति यः परमात्मा विज्ञाने—जीवे तिष्ठन्नित्यर्थः । तस्माज्ज्ञानमात्रं जीवः । अत्राह तार्किकः—मैवमिति । यदि जीवो ज्ञानमात्रं स्यात्तदा करणकलापं विनैव तस्य घटाद्यर्थजातप्रतिभासः स्यादिति निष्फलतास्यादिन्द्रिये=इन्द्रियाणाम् । किं च ज्ञानमात्रत्वे सुषुप्त्यादावपि ज्ञानं स्यान्न हि स्वरूपं कदा चिदप्यपचीयते ? । न हि सुषुप्त्यादौ ज्ञानमुपलभ्यत इति ज्ञानगुणो जीवः । पाषाणकल्पोऽचितस्वरूप आगन्तुकचैतन्यगुणको जीव इत्यर्थः । अत एवेन्द्रियाणां साफल्यं सुषुप्त्यादौ च ज्ञानाभाव उपपद्यते । किं च विभुपरिमाणो जीवः । अणुपरिमाणत्वे सकलदेहवर्तिसुखदुःखादीनां ज्ञानं न स्याद्देहपरिमाणत्वे च विनाशिता स्याद् घटवत्—इत्याह सर्वदेहे विभुर्ज्ञानादिति सर्वदेहे ज्ञानाद्विभुर्व्यापकः सर्वत्र, न तु देहमात्रे विभुरित्यन्वयः कार्यः ।

अत्रोच्यते ज्ञातृत्वं जीवरूपमिति । जीवस्वरूपं न जाड्यं जडत्वं, नापि ज्ञानमात्रता, किं तु ज्ञातृत्वं जीवस्वरूपम् । कुतः? श्रुतेः "अथ

यो वेदेदं जिघ्राणीति स आत्मा" "न पश्यो मृत्युं पश्यति" "विज्ञातारमरे केन विजानीयात्" "योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" "तस्माद्वा एतस्माद्विज्ञानमयात्" इत्याद्याः श्रुतयो जीवस्य ज्ञातृत्वं प्रतिपादयन्ति । यथा गोत्वं न गोस्वरूपं न वा गोभिन्नं भेदेन प्रतीत्यभावात्तथा ज्ञानं जीवस्वरूपमपि नास्ति जीवस्य गुणोपि नास्ति किं त्वपृथक्सिद्धं सज्ज्ञानं जीवगुणो ज्ञानापेक्षया भिन्नत्वाज्जीवस्वरूपस्येत्यर्थः । जीवस्य ज्ञानस्वरूपत्वेनुपपत्तिरुक्तैव निष्फलतेन्द्रिय इति । यदि जड एव जीवःस्यात्तदा सहस्रैरपि करणैस्तस्य विषयप्रतिभासो न स्यादन्यथा घटावलोकनकाले चक्षुःसंयोगस्तु घटेनाप्यस्तीति घटस्यापि ज्ञानित्वं स्यात् । स्वप्ने च विनैव विषयेन्द्रियसंयोगं विविधं ज्ञानमुत्पद्येत ।

न च वाच्यम्–घटे मनःसंयोगाभावान्न ज्ञानमुत्पद्यत इति, यस्य हि मनसोयं प्रभावो यत्तत्संयोगादप्यात्मनि ज्ञानमुत्पद्यते तस्मिन् कथं न ज्ञानमुत्पद्येत प्रत्युत मनस एव ज्ञानत्वं स्याद् यथा यत्संयोगात्पटे राग उत्पद्यते तदेव राग इत्युच्यते मञ्जिष्ठाराग इति। एवं हि क्वोपयोगो मनस इति चेदिन्द्रियनिवेदितविषयनिवेदने मनसोस्ति समुपयोग इत्युच्यते ।

किं च विषयेणेन्द्रियसंयोगे इन्द्रियेण मनःसंयोगे इन्द्रियसंयुक्तमनःसंयोगेन चात्मनि ज्ञानमुत्पद्यत इति हि भवतां प्रक्रिया, एवं हि सकलैर्विषयैरिन्द्रियसंयोगाभावे निमीलितनेत्रस्य मात्रयापि ज्ञानं न प्रतिभासते प्रतिभासते च तदाप्यविशदस्वरूपं ज्ञानम् । न च तत्स्मृतिरिति वक्तव्यम्, स्मृतिर्हि संस्कारजन्या संस्कारश्चोद्बुद्ध एव स्मृतिजनकः संस्कारोद्बोधश्च संस्कारोद्बोधकसदृशपदार्थान्तरादिदर्शनेन भवति तत्र चेन्द्रियव्यापारापेक्षास्त्येव तथा च सर्वेन्द्रियोपरामे स्मृतिरपि न सम्भवति, प्रतिभासते च तदापि ज्ञानमिति न जडत्वमात्मनः स्वरूपम् । आत्मनो जडत्वं प्रतिपादयतस्तार्किकस्यैव प्रत्युत जडत्वं प्राप्तं, तेन स्वमुखादेव चात्मनो जडत्वस्वीकारात् ।

सुषुप्तिजाग्रदाद्यवस्थाविशेषस्तु ज्ञानसंकोचविकासाभ्यामुपपद्यते । यथाह्यात्मनः प्रियतमलाभे वैशद्यमिव प्रतिभाति तथा ज्ञानस्यापि स्वविषयलाभकालेतिवैशद्यं भवति । "विज्ञानं यज्ञं तनुते" इत्यादयः प्रयोगास्तु जीवस्य ज्ञानगुणसारत्वपुरस्सराः । ज्ञानगुण-

सारत्वाज्जीवोपि विज्ञानमिति पदेनोच्यते यथा नीलो घटः खण्डो गौरिति । तस्माज्ज्ञातृत्वं जीवस्वरूपम् । न ज्ञानत्वं ज्ञानगुणत्वं वा ।

यदुक्तं विभुपरिमाणोयं जीवस्तदपि नोपपद्यते तदाह—उत्क्रमणादिभिरिति । अस्य जीवस्य स्वशरीरादुत्क्रमणं श्रूयते—"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" "तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे" इति । युक्ताप्युत्क्रमणादयो विभोर्नोपपद्यन्ते तस्मादणुपरिमाणोयं जीवः, श्रूयते च "एषोऽणुरात्मा चेतसा वेदितव्यः" "बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" "आराग्रमात्रो ह्यवरोपि दृष्टः" इति । "स वा एष आत्मा महानजः" इत्यत्र तु जीवस्य महत्त्वं नोच्यते परमात्मप्रकरणत्वात्तस्य । "अणोरणीयान् महतो महीयान्" इत्यत्राप्यणीयानिति जीवस्वरूपं प्रतिपाद्यते महतो महीयानित्यनेन तु तस्याभ्यर्हितत्वमुच्यते । ननु जीवस्याणुत्वे सकलस्वदेहवर्तिनां सुखदुःखादीनां प्रतिभासो न स्यादिति चेन्न हेतुमाह चन्दनवदिति यथा हि चन्दनबिन्दुर्देहस्यैकप्रदेशेपि स्थितः सकलदेहे सुखं जनयति बाह्यस्थितोप्यन्तरात्मानमाह्लादयति तथा जीवोपि हृदयपुण्डरीके स्थितः सकलशरीरवर्तिसुखादिकमनुभवतीति न कोपि विरोधस्तस्मादणुरेवायमात्मा जीवः ॥

---

(पञ्चमं कर्त्रधिकरणम्)

"कर्ता शास्त्रार्थवत्त्वात् ३२ उपादानाद्विहारोपदेशाच्च ३४ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ३५ उपलब्धिवदनियमः ३६ शक्तिविपर्ययात् ३७ समाध्यभावाच्च ३८ यथा च तक्षोभयथा ३९"

जीवोऽकर्ताथ कर्ताऽऽद्यो गुणकर्तृतयामतः ।
कर्ता शास्त्रार्थवत्त्वाद् भो स्वातन्त्र्यं तक्षवन्मतम् ॥

जीवो न कर्ताथ वा कर्तेति संदेहसमयोस्ति, किं युक्तम् अकर्तेति, इत्याह-आद्येति । हेतुमाह गुणकर्तृतयेति गुणानामेव कर्तृत्वं पुरुषः स्वा-

त्मन्मन्यश्च्यस्यतीत्यकर्तृत्वं पुरुषस्य प्राप्तम् । तथैव श्रूयते-"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते" यद्यात्मनः कर्तृत्वं स्यात्तदा नायं हन्तीति हननकर्तृत्वं कथं निषिध्येत तस्मादकर्ता पुरुष इति प्राप्ते—

उच्यते कर्तेति । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ स्वर्गकाममुद्दिश्य विधीयमानो यागो जीवस्य कर्तृत्वं प्रतिपादयति । अन्यथा शरीरस्येह विनाशित्वात् पुरुषस्य चाकर्तृत्वाद् यागफलं स्वर्गः कं प्राप्नुयात् । न च वाच्यम्-तत्रापि गुणानामेव कर्तृत्वमिति जडान् गुणानुद्दिश्य श्रुतेर्यागविधानमेव न सम्भवति । किं च कर्तुर्विशेषणं स्वर्गकाम इति स्वर्गकामत्वं च जडेषु गुणेषु नैवोपपद्यते येन यागकर्तृत्वं स्यात् । श्रूयते च जीवस्य कर्तृत्वं "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च" इति । किं च बुद्धेः कर्तृत्वे पुरुषस्य च भोक्तृत्वे कृतहानाकृताभ्यागमदोषः स्यात् । अपि च गुणानां जीवमात्रं प्रति साधारण्यात् कर्ममात्रस्य पुरुषमात्रं प्रति फलं स्यात् । नन्वात्मनः कर्तृत्वे सदैव कर्मप्रवृत्तिः स्यादात्मनो नित्यत्वात्स्वरूपस्य कर्तृत्वस्य च नित्यत्वेन कदापि कर्मोपरमो न स्यात्? तत्राह स्वातन्त्र्यमिति यथा तक्षा वास्यादिकरणकलापे सत्यपि कदाचित् करोति कदाचिन्नैव करोति तथात्मापि बुद्ध्यादिकरणकलापे सत्यपि कदाचित्करोतीति न सर्वदा कर्मप्रवृत्तिप्रसङ्गः । किं च यथा कुलालस्य कर्तृत्वेपि न कर्तृत्वं स्वरूपं यथा च गुणानामपि कर्तृत्वे न कर्तृत्वं गुणानां स्वरूपं किं तूपलक्षणं तथैवात्मनोपि कर्तृत्वं न स्वरूपं येन सदैव कर्मप्रवृत्तिः प्रसज्येत । किं च गुणानां कर्तृत्वेपि गुणानां नित्यत्वात्तव मतेपि कर्मोपरमो न स्यात् ।

नायं हन्तीत्यत्र तु पुरुषस्य न कर्तृत्वं निषिध्यते किं तु कर्तृत्वस्वरूपत्वं निषिध्यते यतो गुणसङ्गादस्य जीवस्य कर्तृत्वं भवति यथाह-"कारणं गुणसंगोस्य सदसद्योनिजन्मसु" इति । एवं "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" इत्यत्रापि गुणसङ्गरहितं कर्तृत्वं निषिध्यते, कर्तृत्वमात्मनः स्वरूपं नास्ति किं तु गुणसङ्गादस्य कर्तृत्वं भवतीत्यहङ्कारविमूढात्मा सांसारिको जनः कर्तृत्वं पुरुषस्य स्वाभाविकं स्वरूपं मन्यत इत्यर्थः । तस्मात्कर्ता पुरुषः । एवं ब्रह्मोपासनादिष्वपि कर्तृत्वं ज्ञेयम् "मुमुक्षुर्ब्रह्मोपासीत" "आत्मानमेव लोकमुपासीत" इत्यादौ ॥

( षष्ठं परायत्ताधिकरणम् )

"परात्तु तच्छ्रुतेः ४० कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ४१"

स्वाधीनं वा पराधीनं कर्तृत्वं पुरुषस्य तत् ।
निषेधविधिशास्त्रेषु नियोज्यत्वात् पुरोभवः ।
परात्माधीनमेवास्य कर्तृत्वं प्रमतं श्रुतेः ॥

अयमत्र सन्देहः—पुरुषस्य यदुक्तं कर्तृत्वं तत् स्वाधीनं वा पराधीनं वेति, किं युक्तम्? स्वाधीनमिति यो हि स्वातन्त्र्येण प्रवर्तते निवर्तते वा स एव विधिनिषेधशास्त्रेषु नियोज्यो भवति नियोज्यत्वं च क्षेत्रज्ञस्य संमतमेवेति स्वाधीनं पुरुषस्य कर्तृत्वमिति प्राप्ते—

अभिधीयते परात्माधीनमिति । अस्य पुरुषस्य कर्तृत्वं परमात्माधीनमेव हेतुमाह श्रुतेरिति । "यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" इतिश्रुतिः "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" इति स्मृतिश्च जीवस्य कर्तृत्वं परमात्माधीनमिति प्रतिपादयति । नन्वेवं विधिनिषेधशास्त्रानर्थक्यं स्यात् परमात्माधीनेन जीवेन कृतं कर्मेति जीवस्य कर्मफलाप्राप्तेरिति चेन्न परमात्मा हि जीवप्रयत्नमपेक्षते यथैव जीवस्य प्रयत्नो भवति तथैव परमात्मा जीवं प्रवर्तयतीति परमात्मानुमतिप्रदानमात्राधीनत्वात् परमात्माधीनं जीवकर्तृत्वं तथा च न शास्त्रानर्थक्यं प्राथमिकप्रयत्नानुकूलफलप्राप्तिसम्भवात् ॥

---

( सप्तममंशाधिकरणम् )

"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ४२
मन्त्रवर्णात् ४३ अपि स्मर्यते ४४ प्रकाशादिवत्तु नैवं परः ४५
स्मरन्ति च ४६ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ४७
असन्ततेश्चाव्यतिकरः ४८ आभास एव च ४९ अदृष्टा-
नियमात् ५० अभिसन्ध्यादिष्वपि चैवम् ५१
प्रदेशभेदादिति चेन्नान्तर्भावात् ५२"

जीवोयं ब्रह्मतो भिन्नो भ्रान्तं ब्रह्माथवा मतः ।
ब्रह्मैवोपाध्यवच्छिन्नं ब्रह्मांशोऽथेति संशयः ॥
भिन्नोयं भेदनिर्देशाद् ब्रह्मभावोक्तिभिः परः ।
तृतीयो वा ततश्चापि ब्रह्मभावोपपत्तितः, ॥
भेदाभेदोपदेशाभ्यामंशोयं ब्रह्मणो मतः ।
देहदोषा यथा जीवे प्रादुःष्यन्ति कदापि नो ॥
जीवदोषास्तथा नैव प्रादुःष्यन्ति परात्मनि ।
ज्योतिर्वद्देहसम्बन्धात् परिहारश्च संग्रहः ॥

संप्रति जीवस्वरूपे सन्देहोस्ति किमयं जीवः परस्माद्ब्रह्मणोऽत्यन्तभिन्नः किं वा ब्रह्मैव भ्रान्तं सज्जीव इत्युच्यतेऽथोपाध्यवच्छिन्नं ब्रह्म जीवोथवा ब्रह्मांश इति । किं युक्तम् ? भिन्न इति "ज्ञाज्ञौ द्वावजावीशानीशौ" "द्वा सुपर्णा सयुजा सखाया" "ऋतं पिबन्तौ सुकृतस्य लोके" "य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद" इत्यादिभेदनिर्देशात् । किं वात्यन्ताभिन्नत्व एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गः स्यादिति परः = द्वितीयः पक्षो युक्तः " तत्त्वमसि " " अयमात्मा ब्रह्म" इत्यादिब्रह्मभावोक्तिभिः=ब्रह्मात्मभावोपदेशात् । किं वा ब्रह्मणो भ्रान्तत्वं न संभवतीति तृतीयः पक्षो युक्तस्तृतीयपक्षेपि ब्रह्मात्मभावस्योपपत्तिरस्त्येव यदुपाध्यवच्छिन्नं ब्रह्म जीव इत्युच्यते तस्य शुद्धेनैक्यं संभवत्येव । अयमपि पक्षो न युक्त उपाधिर्ह्यविद्या वक्तव्या न च तस्मिन् विज्ञानैकघनेऽविद्या संभवतीति–

सिद्धान्त उच्यते–भेदाभेदेति–भेदव्यपदेशो यथा–"ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादिः, अभेदव्यपदेशो यथा–"तत्त्वमसि" इत्यादिः, भेदाभेदौ चांशस्यैव संभवत इति जीवोयमंशो ब्रह्मणः । श्रूयते चांशत्वं जीवस्य "पादोस्य विश्वा भूतानि" इत्यादि, अस्य परमात्मनः सर्वे जीवाः पादः=अंश इत्यर्थः । स्मर्यते च "ममैवांशो जीवलोके जीवभूतः सनातनः" इति । नन्वंशत्वे जीवगता दोषा ब्रह्मणि प्रादुःष्युरित्याशंक्योच्यते देहदोषा इति यथा जीवांशस्य देहस्य दोषा जीवे न प्रादुःष्य-

न्ति तथा परमात्मांशस्य जीवस्य दोषाः परमात्मनि न प्रादुःष्यन्ति। देहस्य जीवांशत्वाभावे देहिनो जीवस्य देहित्वमेव नोपपद्येनेति जीवांशो देहः।

ननु सर्वेषां जीवानां ब्रह्मांशत्वेनैकरूपत्वे प्राप्ते केषां चिद्वेदाध्ययनादिकर्मणि परिहारो यथा शूद्राणां केषां चित्सङ्ग्रहो यथा द्विजातीनामिति न स्यादित्याशङ्क्याह—ज्योतिर्वदिति, यथाग्नेरग्नित्वेनैकरूपत्वेपि श्मशानादेरग्निः परिह्रियते श्रोत्रियगृहादाह्रियते च तथैव जीवानामपि ब्रह्मांशत्वेनैकरूपत्वेपि देहसम्बन्धादुपपद्यते यथा शूद्रादिदेहसम्बन्धात् परिहरः, ब्राह्मणादिदेहसम्बन्धात्संग्रहश्चेति॥

॥ इति सप्तमः पादः समाप्तः॥



## ॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः॥

( प्रथमं प्राणोत्पत्त्यधिकरणम् )

"तथा प्राणाः १ गौण्यसंभवात् तत्प्राक् श्रुतेश्च २
तत्पूर्वकत्वाद्वाचः ३"

**इन्द्रियाणां हि कार्यत्वं जीववच्छ्रुतितो मतम्।**
**प्राणो ब्रह्मेति सिद्धत्वात् कार्यत्वं वियदादिवत्॥**

इदमिदानीं सन्दिह्यते यथा जीवस्योत्पत्तिराहित्येपि कार्यत्वं तथैवेन्द्रियाणामपि कार्यत्वं किं वा यथा वियदादीनां सोत्पत्तिकं कार्यत्वं तथेन्द्रियाणां कार्यत्वमिति तत्राह जीववदिति, श्रुतिर्हि "असद्वा इदमग्र आसीत् तदाहुः किं तदासीदिति ऋषयो वाव तेग्रे सदासीत्तदाहुः केते ऋषयः" इति "प्राणा वाव ऋषयः" इति प्राण शब्दश्चात्रेन्द्रियवचनो बहुवचनान्तत्वात् तेषां प्राणशब्दवाच्यानामिन्द्रियाणां सृष्टेः प्रागप्यत्र सत्त्वश्रवणादुत्पत्तिरहितं जीववत् कार्यत्वमितियुक्तम्।

अत्रोच्यते प्राणो ब्रह्मेति, "प्राणा वाव ऋषयः" इत्यत्रस्थो ऋषिशब्दः परमात्मन्येव युज्यते न त्वचेतनेष्विन्द्रियेषु, ऋषिशब्देन सरात्त्वा

चेतनत्वमङ्गीकरणात् तत्समानाधिकरणः प्राणशब्दोऽपि परमात्मनि शक्तिमानस्ति "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति श्रुतेः। तस्मादुक्तश्रुतिः परमात्मन एव सृष्टेः प्राक् सत्त्वं प्रतिपादयति न त्विन्द्रियाणाम्। तथा चेन्द्रियाणां वियदादिवत्सोत्पत्तिकं कार्यत्वं सिद्धम्। श्रूयते च "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति ॥

---

(द्वितीयं सप्तगत्यधिकरणम्)

"सप्त गतेर्विशेषितत्वाच्च ४ हस्तादयस्तु स्थितेऽतो नैवम् ५"

गतेर्विशेषितत्वाच्च करणानि तु सप्त वै ।
एकादशैव तानि स्युर्हस्तादीनां तथात्वतः ॥

तानीन्द्रियाणि सप्त वैकादश वेति सन्देहे सप्तेति युक्तं हेतुमाह गतेरित्यादिना "सप्त इमे लोका येषु सञ्चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त" इत्यत्र प्राणशब्दवाच्यानामिन्द्रियाणां सप्तानामेव सञ्चरन्तीति गतेः श्रवणात्, "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इत्यत्र योगदशायां ज्ञानानीति विशेषितत्वाच्च श्रोत्रत्वक्चक्षुजिह्वाघ्राणबुद्धिमनांसीति सप्तैवेन्द्रियाणीत्यवगम्यते।

अत्रोच्यत एकादशेति, वाक्पाणिपादपायूपस्थानामपि श्रोत्रादिवदुपकारित्वेनेन्द्रियत्वादेकादशेन्द्रियाणीति युक्तम्। श्रूयते च "दशेमे पुरुषे प्राणा आत्मैकादशः" इति। आत्मशब्देनात्र मन उच्यते ॥

---

(तृतीयं प्राणाणुत्वाधिकरणम्)

"अणवश्च ६ श्रेष्ठश्च ७"

विभवो वाऽणवः प्राणा विभवोऽनन्तताश्रुतेः ।
उत्क्रान्त्यादिश्रुतेः सूक्ष्मास्तेषु मुख्यस्य पूज्यता ॥

प्राणशब्दवाच्यानीन्द्रियाणि किं विभुपरिमाणानि किं वाणुपरि-

माणानीति सन्देहे "ते एते सर्व एव समाः सर्वेऽनन्ताः" इत्यानन्त्य-श्रुतेर्विभुपरिमाणानीति प्राप्ते—

उच्यते—उत्क्रान्त्यादिश्रुतेरिति "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्युत्क्रान्तिश्रवणात् परिमितत्वं प्रतीयते न चोत्क्रान्तिकाले पार्श्वस्थैरवलोक्यन्त इत्यणुपरिमाणानीन्द्रियाणीति युक्तम्। न चोत्क्रमणं विभूनां सम्भवति। तेषु मुख्यस्य प्राणस्य पूज्यतां=श्रेष्ठतां चाह श्रुतिः—"योह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" इत्यारभ्य "अथ ह प्राणा अहं-श्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति ते ह प्राणाः प्रजापतिं पितर एत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति" "अथ ह प्राण उच्चिक्रमिष्यन् स यथा सुहयः पड्वीशशङ्कून् संखिदेदेवमितरान् प्राणान् समखिदत् तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोसि मोत्क्रामीरिति" अत्र मुख्यप्राणस्योत्क्रमणेन कायानलपवैकल्यकलनान्मुख्यस्यैव प्राणस्य पूज्यता प्रतीयते ॥

---

(चतुर्थं वायुक्रियाधिकरणम्)

"न वायुक्रिये पृथगुपदेशात् ८ चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ९

अकारणत्वाच्च न दोषस्तथा हि दर्शयति १०

पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ११"

वायुर्वा तत्क्रिया प्राणो वायुर्वाथ विलक्षणः, ।
वायुस्तथोपदेशात्सः, प्राणशब्दप्रसिद्धितः—
तत्र वायुक्रिया, मैवं पृथक् संकीर्तनात् परः ।
जीवोपकरणं प्राणस्तैः साकं तदुपक्रमात् ॥

संप्रति मुख्यप्राणस्वरूपे विचिकित्सास्ति प्राणः किं वायुमात्रं किं वा वायुक्रिया किं वा विलक्षणो वायुरिति तत्र "यः प्राणः स वायुः" इति व्यपदेशात् सः=प्राणो वायुमात्रम्। किं वा वायुमात्रं प्रा-

णत्वप्रसिद्ध्यभावादुच्छ्वासनिःश्वासलक्षणा वायुक्रियैव प्राणस्तत्र= उक्तवायुक्रियायां प्राणशब्दस्य प्रसिद्धेः ।

अत्रोच्यते मैवमिति प्राणो न वायुमात्रं वायुक्रिया वा किं तु विलक्षणो वायुः प्राण इत्युच्यते हेतुमाह-पृथगिति "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यत्र वायुतः पृथक् प्राण उपदिष्टः । यदि वायुरेव प्राणः स्यात्तदा वायोः पृथक् प्राणोपदेशो न स्यात् । नन्वेवं वायुक्रियैव प्राणः स्यादिति चेन्न न हि तेजः प्रभृतीनां क्रिया तैः सह पृथग् द्रव्यत्वेनोपदिष्टा येन प्राणशब्देन वायुक्रिया वायोः पृथगुपदिश्येत तस्माद्विलक्षणो वायुः प्राणः । वैलक्षण्यं च जीवधारणसामर्थ्यम् । स च प्राण उक्तश्रुतौ जीवोपकरणैर्मनःप्रभृतिभिः साकमुपक्रम्यते तस्मात्प्राणोपि जीवोपकरणमेव चक्षुरादिवत् ॥

---

(पञ्चमं श्रेष्ठाणुत्वाधिकरणम्)

"अणुश्च १२"

**विभुः प्राणोथ वाऽणुःस्यात्सम एभिः श्रुतेर्विभुः ।**
**मुख्यप्राणोप्यणुर्ज्ञेय उत्क्रान्त्याद्युपदेशतः ॥**

मुख्योयं प्राणो विभुर्वाऽणुर्वेति विशये विभुरिति युक्तम् । कुतः? "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण प्राणे सर्वं प्रतिष्ठितं सर्वं हीदं प्राणेनावृतम्" इति श्रुतेः । न ह्यणुपरिमाणे प्राणे सर्वप्रतिष्ठा सम्भवति, न चाप्यणुपरिमाणेन प्राणेन सर्वावरणं सम्भवतीत्यमुख्यप्राणानामणुत्वेपि मुख्यः प्राणो विभुरेव ।

मैवम्-मुख्यप्राणोप्यणुरेव ज्ञेयः "तमुत्क्रामन्तं प्राणोनूत्क्रामति" इत्युत्क्रान्ति श्रवणात् । न हि विभोरुत्क्रमणं सम्भवति । "सम एभि" इति श्रुतिस्तु सर्वस्य प्राणायत्तजीवनत्वेन प्राणं प्रशंसतीति विज्ञेयम् ॥

---

(षष्ठं ज्योतिराद्यधिष्ठानाधिकरणम्)

"ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् १३
तस्य च नित्यत्वात् १४"

प्राणाधिष्ठातॄणां प्राणेऽधिष्ठातृत्वमपावृतम् ।
ब्रह्मनिघ्नमथ,स्तेषां नैरपेक्ष्येण पूर्वकः ।
ब्रह्मनिघ्नं श्रुतेः सर्वमधीनं परमात्मनः ॥

मुख्यप्राणस्यामुख्यप्राणानां = इन्द्रियाणां च जीवोऽधिष्ठातेति लोकसिद्धं श्रुतिरप्याह "एवमेवैष एतान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते" इति । किं च मुख्यामुख्यप्राणानामग्न्यादयो देवा अप्यधिष्ठातारस्तथा हि श्रूयत ऐतरेयोपनिषदि द्वितीयखण्डे—"अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति वाचोऽग्निर्देवता । प्राणाधिष्ठातॄणामग्न्यादीनां जीवस्य च यत् प्राणे = मुख्यामुख्यप्राणविषयकमधिष्ठातृत्वं तत् किमपावृतं—स्वतन्त्रं किं वा ब्रह्मनिघ्नं—परमात्माधीनमिति विचिकित्सायामुच्यते तेषामिति तेषामुक्तानां प्राणाधिष्ठातॄणां नैरपेक्ष्येण = प्राणाधिष्ठानेऽन्यास्यापेक्षाभावात् पूर्वकः = पूर्वः कल्पो युक्तः, अपावृतमधिष्ठातृत्वं जीवस्याग्न्यादीनां चेत्यर्थः ।

| १ इन्द्रियमानि | इन्द्रियाधिष्ठातृदेवतानामानि | इन्द्रियविषयनामानि |
|---|---|---|
| मनः | चन्द्रः | सङ्कल्पः |
| बुद्धिः | बृहस्पतिः | निश्चयः |
| चित्तम् | वासुदेवः | चिन्तनम् |
| अहङ्कार | रुद्रः | गर्वः |
| श्रोत्रम् | दिक् | शब्दः |
| त्वक् | वायु | स्पर्शः |
| चक्षुः | रविः | रूपम् |
| रसना | वरुणः | रसः |
| घ्राणम् | अश्विनीकुमारौ | गन्धः |
| वाक् | अग्नि | भाषणम् |
| पादः | इन्द्रः | गमनम् |
| पाणि | विष्णुः | ग्रहणम् |
| पायुः ( गुदम् ) | प्रजापतिः | मलत्यागः |
| उपस्थः | यमः | रतिभोगः ( मैथुनम् ) |

अत्रोच्यते—ब्रह्मभिन्नमिति जीवस्याग्न्यादीनां च यन्मुख्यामुख्य-प्राणाधिष्ठातृत्वं तत् परमात्माधीनं, श्रुतेः—"य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" "योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति" "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिश्रुतिभ्यः सर्वं परमात्माधीनमिति विज्ञायते तस्मात् प्राणाधिष्ठातृणां प्राणाधिष्ठाधितृत्वमपि परमात्माधीनमेव विज्ञेयम् ॥

---

(सप्तममिन्द्रियाधिकरणम्)

"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् १५
भेदश्रुतेर्वैलक्षण्याच्च १६"

प्राणशब्देन निर्दिष्टा इन्द्रियाण्यखिला उत-।
मुख्यप्राणातिरिक्ता वा सन्देहः समुपस्थितः ॥
प्राणशब्देन वाच्यत्वात् प्रथमः करणत्वतः।
परो मुख्यातिरिक्तेषु चेन्द्रियव्यपदेशतः ॥

पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनो मुख्यप्राणश्चेति पदार्था उक्तश्रुतिषु प्राणशब्देन निर्दिष्टाः "दशेमे पुरुषे प्राणाः" "सप्त इमे लोका येषु सञ्चरन्ति प्राणा गुहाशयाः" इतीन्द्रियाणि प्राणशब्देन निर्दिष्टानि, एवं "यः प्राणः स वायुः" "एतस्माज्जायते प्राणः" इति मुख्यप्राणः प्राणशब्देन निर्दिष्टः। तत्र सन्देहः किं प्राणशब्दनिर्दिष्टाःअखिलाः=सर्व एवेन्द्रियाणि किं वा मुख्यप्राणव्यतिरिक्ता एवेन्द्रियाणीति किं प्राप्तम्? सर्व एवेति, सर्वेषामेवाविशेषात् प्राणशब्दवाच्यत्वात् करणत्वाच्च सर्व एव प्राणशब्दनिर्दिष्टा इन्द्रियाणीति प्राप्ते—

अभिधीयते—पर इति परो द्वितीयः पक्षो युक्तः "इन्द्रियाणि दशैकं च" इत्येकादशेष्वेव मुख्यप्राणातिरिक्तेष्विन्द्रियत्वव्यपदेशान्मुख्यप्राणातिरिक्ता एवेन्द्रियाणि। किं च "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति भेदेन व्यपदिशति मुख्यप्राणादिन्द्रियाणि श्रुतिः।इन्द्रियवृत्तिपूपक्षीणास्वपि सुषुप्त्यादौ प्राणवृत्तेरुपलम्भाद्वैलक्षण्यमप्यस्तीन्द्रियेभ्यो मुख्यप्राणस्य ॥

(अष्टमं सञ्ज्ञामूर्तिक्लृप्त्यधिकरणम्)

"सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् १७ मांसादिभौमं यथाश-
शब्दमितरयोश्च १८ वैशेष्यात्तु तद्वादस्तद्वादः १९"

व्यष्टिसृष्टिः क्रिया कस्य? जीवस्यात्मभुवः श्रुतेः।
त्रिवृत्करणसामानाधिकरण्यात् परात्मनः॥

इयमिदानीं विचिकित्सा–प्रपञ्चव्यष्ट्यात्मिका=नामरूपव्याक-
रणलक्षणेयं सृष्टिः कस्य क्रियास्ति। किं समष्टिजीवरूपस्यात्मभुवो
हिरण्यगर्भस्याहोस्वित् परमात्मन इति तत्राह पूर्वपक्षी जीवेति
"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति जीव-
स्यात्मभुवः क्रियेति श्रूयते। यदि नामरूपव्याकरणं जीवकर्म न
स्यात्तदा "अनेन जीवेन" इति श्रुतिरपार्था स्यात्। किं चा—
न्यथा अनेन स्वेनात्मनेति वदेच्छ्रुतिः। न च हिरण्यगर्भव्यतिरि-
क्तस्य नामरूपव्याकरणशक्तिसंभावनास्तीति हिरण्यगर्भस्यैव व्य-
ष्टिसृष्टिः क्रियेति प्राप्ते—

उच्यते–त्रिवृदिति। "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता
अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं
त्रिवृतमेकैकां करवाणि" इति श्रुतेस्त्रिवृत्करणस्य नामरूपव्यारणस्य
च सामानाधिकरण्यम्=एककर्तृकत्वं प्रतीयते न च चतुर्मुखस्य त्रिवृ-
त्कर्तृत्वं संभवति त्रिवृत्करणात्प्राक् तदभावात् त्रिवृत्करणादनन्तरं
ह्यण्डमुत्पद्यते तस्मिन्नण्डे च चतुर्मुखस्योत्पत्तिः स्मर्यते "तस्मिन्न-
ण्डेऽभवद्ब्रह्मा सर्वलोकपितामहः" इति तस्माद् यस्य परमात्मन-
स्त्रिवृत्करणं क्रिया तस्यैवैषा व्यष्टिसृष्टिरपि नामरूपव्याकरणात्मिका
क्रियेति युक्तम्। अनेन जीवेनात्मनेत्यनेन हिरण्यगर्भस्य परमात्म-
शरीरभूतस्य सहकारित्वं प्रतिपाद्यते हिरण्यगर्भशरीरकस्य पर-
मात्मनो व्यष्टिसृष्टिः कर्मेत्यर्थः। यथा "तत्तेज ऐक्षत" इत्यत्र तेजः-
शरीरकस्य परमात्मन ईक्षणकर्तृत्वमुच्यते॥ श्रीवकुलाभरणाय नमः॥

॥ इत्यष्टमः पादः समाप्तः॥

इति पञ्चनदीयसुदर्शननिर्मितायां विशिष्टाद्वैताधिकरणमालायां
द्वितीयोऽध्यायः समाप्तः॥

## अथ तृतीयाध्यायस्य प्रथमः पाद आरभ्यते ॥

(प्रथमं तदन्तरप्रतिपत्त्यधिकरणम्)

"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यां १ त्र्यात्मकत्वात् भूयस्त्वात् २ प्राणगतेश्च ३ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ४ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ५ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ६ भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ७"

भूतसूक्ष्माऽपरिष्वक्तो जीवो याति परां तनुम् ।
संपरिष्वक्त आहोस्वित् सन्देहः समुपस्थितः ॥
सर्वत्र सूक्ष्मभूतानां सौलभ्यात् प्रथमं शिरः ।
मैवं प्रश्नोत्तराभ्यां हि परिष्वङ्गशिरो मतम् ॥

प्राप्तदेहं परित्यज्य यदा प्राप्यं देहान्तरं प्रयाति जीवस्तदा भूतसूक्ष्मैरपरिष्वक्तो याति किं वा संपरिष्वक्त इति विचिकित्सायां सूक्ष्मभूतानां सर्वत्र सुलभत्वादपरिष्वक्त एव प्रयातीति प्राप्ते—

अभिधीयते—मैवमिति परिष्वङ्गशिरः=संपरिष्वक्त एव प्रयातीति पक्षो मतः, हेतुमाह—प्रश्नोत्तराभ्यामिति पञ्चाग्निविद्याप्रकरणे पाञ्चालेन प्रवाहणेन जीवस्य गन्तव्यदेशेषु पुनरावृत्तिप्रकारेषु चारुणेयः श्वेतकेतुः पृष्टस्तस्योत्तरं च "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति, तत्र प्रथमत आरभ्य होम्यानामपां तत्र तत्र जीवेन सह गमनं प्रतिपाद्यते तेन च भूतसूक्ष्मैः संपरिष्वक्त एव जीवो देहान्तरं प्रयातीति प्रतीयते । न च वाच्यमपामेवाहुतिभूतानां जीवेन सत्रा गमनं तत्र प्रतिपाद्यते इति न सर्वेषां भूतसूक्ष्माणामिति, अपां वाहुल्यात्—"आपः पुरुषवचसो भवन्ति" इत्युच्यते वस्तुगत्या सर्वेषामेव भूतसूक्ष्माणां सह प्रयाणे तात्पर्यमस्ति ॥

---

(द्वितीयं कृतात्ययाधिकरणम्)

"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ८ चरणादिति

चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ९ आनर्थक्यमिति चेन्न तद-
पेक्षत्वात् १० सुकृतदुष्कृते एवेति तु बादरिः ११"

प्रत्यायाति पुनर्जीवोऽनुशयै रहितोथ किं ।
सहितो वा, शिरः पूर्वं सर्वकर्मोपभोगतः ।
मैवं श्रुतिस्मृतिभ्यां तु सहितोऽनुशयैरिति ॥

धूममार्गेण लोकान्तरप्रयायिनां पुनरावृत्तिः श्रूयते—"यावत्सं-
पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते" इति । तत्र किमनुशयरहि-
तो जीवः प्रत्यायात्यनुशयसहितो वेति सन्देहः । उपभुक्तशिष्टं क-
र्मानुशयशब्देनोच्यते संपातशब्देन चोपभोगकारणं कर्म । "यावत्
संपातमुषित्वा" इति श्रुतेस्तत्रत्योपभोगेन कृत्स्नकर्मणामुपक्षीण-
त्वादनुशयरहितो जीवः प्रत्यायातीति प्राप्ते—

अभिधीयते—मैवमिति "तद् य इह रमणीयचरणा अभ्याशो-
ह यत्ते रमणीयां योनिमापद्येरन्, अथ य इह कपूयचरणा अभ्याशो-
ह यत्ते कपूयां योनिमापद्येरन्" इति श्रुतेः । "ततः परिवृत्तौ कर्म-
फलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति
प्रतिपद्यन्ते" इति स्मृतेश्चानुशयपरिष्वक्त एव जीवः प्रत्यायातीति
प्रतीयते ॥

---

(तृतीयमनिष्टादिकार्यधिकरणम्)

"अनिष्टादिकारिणामपि च श्रुतम् १२ संयमने त्वनुभूयेतरेषामारोहा-
वरोहौ तद्गतिदर्शनात् १३ स्मरन्ति च १४ अपि सप्त १५ तत्रापि
तद्व्यापारादविरोधः १६ विद्याकर्मणोरिति तु प्रकृतत्वात्
१७ न तृतीये तथोपलब्धेः १८ स्मर्यतेपि च लोके
१९ दर्शनाच्च २० तृतीयशब्दावरोधः
संशोकजस्य २१"

विहितं प्रतिषिद्धं यो न करोति करोति च ।
सोपि चन्द्रमसं याति ये वै के चेति हि श्रुतेः ।

## दौर्गतीं यातनां भुक्त्वा याति तद्गतिदर्शनात् ॥

यो जीवो विहितमग्निहोत्रादिकं कर्म न करोति यश्च प्रतिषिद्धं ब्राह्मणहननादिकं करोति स चन्द्रमसं याति न वेति सन्देहः किं युक्तम्? सोपि चन्द्रमसं यातीति "ये वै के चास्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति सामान्यतः सर्वेषां चन्द्रगतिश्रवणात्।

अत्रोच्यते—दौर्गतीमिति। दौर्गतीं—नारकीं यातनां भुक्त्वा चन्द्रमसं याति, हेतुमाह तद्गतीति तद्गतिदर्शनात्—यमवश्यतया चन्द्रप्राप्तिश्रवणात् तत्रापि यदि किं चित्कर्म चन्द्रप्राप्तियोग्यं भवति तदा नारकीं यातनां भुक्त्वा चन्द्रमसं प्राप्नोति, सर्वथा सुकृताभावे तु चन्द्रप्राप्तेरभाव एव विज्ञेयः॥

---

(चतुर्थं तत्स्वाभाव्यापत्त्यधिकरणम्)

"तत्स्वाभाव्यापत्तिरुपपत्तेः २२"

## चन्द्रावरोहकालेऽभ्रादिभावः सोमभाववत्।
## नो—तत्सदृशतापत्तिस्तद्भावानुपपत्तितः॥

इष्टादिकारिणामेवं चन्द्रावरोहः श्रूयत—"अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति। अत्र देवमनुष्यादिभाववदेवाकाशादिभावो भवति जीवस्यावरोहिणः किं वाकाशादिसादृश्यमात्रम्। युक्त्या पूर्वपक्षमाह—अभ्रादिभाव इति, आकाशादिभाव एव युक्तो भूत्वेति प्रयोगसामर्थ्यात्। नाकाशादिसादृश्यमात्रम्। निदर्शनं चोक्तमत्र सोमभाववदिति यथा "असौ वा व लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति" अत्र श्रद्धावस्थस्य जीवस्य सोमभावता श्रूयते तथैवाविशेषादाकाशादिभावोपि सम्भवतीतिप्राप्तम्—

अथोच्यते नो इति। आकाशादिसादृश्यापत्तिरेवोच्यते। तद्भावानुपपत्तितस्तद्भावस्याकाशादिभावस्यानुपपत्तेः सोमादिभावो हि जीवस्य सुखदुःखोपभोगाय सम्भवत्येव,आकाशादिभावे तु सुखदुःखोपभोगासम्भवादाकाशादिसादृश्यमात्रापत्तिरेवोच्यते— "अथैतमेव" इति श्रुत्या ॥

---

(पञ्चमं नातिचिराधिकरणम्)

"नातिचिरेण विशेषात् २३"

व्योम्नो व्रीह्यादिपर्यन्तं स्थितेर्वाऽनियमोऽन्यथा।
नो नियमोऽविशेषात् स्यान्नियमोस्ति विशेषतः ॥

इदमाम्नायते—"तस्मिन् यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति" इति छान्दोग्यपञ्चमप्रपाठके। अयमत्र सन्देहः—आकाशप्राप्तेरारभ्य व्रीह्यादिप्राप्तिपर्यन्तं तत्र तत्राकाशादौ यथा जीवस्य स्थितिः प्रतीयते तस्याः स्थितेरनियोमस्ति किं वान्यथा नाम क्वचिदल्पकाला स्थितिः क्वचिद् दीर्घकालास्थितिरिति नियमोस्तीति । किं युक्तम्? अनियम इति, अविशेषात् =विशेषस्य नियमहेतोरभावात् व्रीह्यादिष्वप्यल्पकाला वा स्यात् स्थितिराकाशादिष्विव, आकाशादावपि दीर्घकाला वा स्याद् व्रीह्यादिष्विव स्थितिरिति प्राप्ते—

अभिधीयते—नियमोस्तीति। व्रीह्यादिप्राप्तौ हि "अतो वै खलु दुर्निष्प्रपतरम्" इति दुःखेन निष्क्रमणश्रवणाद् व्रीह्यादौ दीर्घकाला स्थितिरभिधीयते तस्मादाकाशादावल्पकालास्थितिर्भवतीति सिद्धम्। व्रीह्यादिप्राप्तेरेवानन्तरं "अतो वै खलु" इति श्रवणरूपविशेषात्। तस्मादाकाशादारभ्य मेघपर्यन्तेष्वचिरकालास्थितिर्भवति जीवस्य व्रीह्यादिषु च चिरकाला स्थितिरिति सिद्धं विशेषेण ॥

( षष्ठमन्याधिष्ठिताधिकरणम् )

"अन्याधिष्ठिते पूर्ववदभिलापात् २४ अशुद्धमिति चेन्न शब्दात् २५ रेतःसिग्योगोथ २६ योनेः शरीरम् २७"

**व्रीह्यादिविग्रहैर्जन्म तैः संश्लेषोथ वा मतः ।**
**जायन्ते वचनादाद्योऽन्यस्तद्भावाभिलापतः ॥**

इदं श्रूयते—"ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" अत्रावरोहतां जीवानां व्रीह्यादिशरीरेण जन्मोच्यते किं वा तैर्व्रीह्यादिभिः संप्रयोग इति सन्देहेभिधीयते-आद्य इति । उक्तश्रुतौ जायन्त इति वचनाज्जीवानामवरोहतां व्रीह्यादिशरीरकं जन्मैव भवति । किं च यागादिफलभूतं स्वर्गादिकं भुक्त्वा यागसाधनैकदेशस्य हिंसायाः फलं व्रीह्यादिस्थावररूपेणानुभूयते तदुक्तम् "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति तस्मादाद्यः पक्षो युक्तः ।

अत्रोच्यते—अन्य इति । द्वितीयः संश्लेषपक्षो युक्तः कुतः? तद्भावाभिलापात्—यथा ह्याकाशादारभ्य मेघपर्यन्तं तद्भावः संश्लेषमात्रमभिलप्यते तथा व्रीह्यादिष्वपि विज्ञेयम् । यत्र हि भोगोभिप्रेतस्तत्र भोगसाधनीभूतं कर्माभिलप्यते 'रमणीयचरणाः कपूयचरणाः' इति । कर्माभिलापाभावाद् व्रीह्यादिप्राप्तौ जीवस्य भोगाभावः प्रतीयते भोगाभावाच्च व्रीह्यादिसंश्लेषमात्रं सिद्ध्यति न व्रीह्यादिरूपेण जन्म, जन्मनो भोगायैव जायमानत्वात् । यागसाधनैकदेशभूता च हिंसा नानिष्टफलप्रदा भवति तस्य पशोः स्वर्गगमनश्रवणात् "देवान् इदेपि पथिभिः सुगेभिः" इति । न हि तात्कालिकाल्पदुःखप्रदश्चिकित्सकः पापेनाश्लिष्यते? येन यागानुष्ठातॄणां व्रीह्यादिशरीरेण जन्म स्यात् पशुहिंसापदेशेन ॥

॥ इति नवमः पादः समाप्तः ॥



## ॥ अथ दशमः पादः ॥

(प्रथमं सन्ध्याधिकरणम्)

"सन्ध्ये सृष्टिराह हि १ निर्मातारं चैके पुत्रादयश्च २ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ४ देहयोगाद्वा सोपि ५ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ६"

जीवः स्वप्नार्थकर्त्ता स्यादेषु सुप्तेष्विति श्रुतेः ।
तच्छक्त्यभावाज्जीवस्य तत्कर्ता पुरुषोत्तमः ॥

इदमाम्नायते—"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते, न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते, न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति । तत्र—स्वप्ने । अनुकूल विषयजा प्रीतिरानन्दः । स्वकीयत्वबुद्धिजा प्रीतिर्मुत् । तद्विनियोगजा प्रीतिः प्रमुदित्यर्थः । स्वप्ने परिदृश्यमानानां रथादीनां कर्ता=रचयिता जीव उत पुरुषोत्तम इति विचिकित्सायामुच्यते जीव इति । "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति श्रुते स्वप्नार्थकर्तृत्वं जीवस्यैव प्रतीयते ।

अत्रोच्यते—तच्छक्त्यभावादिति । जीवस्य स्वप्नार्थनिर्माणशक्त्यभावात् तत्कर्ता=स्वप्नार्थरचयिता पुरुषोत्तम एव । स्वप्नार्थनिर्माणस्य हि सत्यसङ्कल्पत्वं हेतुः सत्यसङ्कल्पत्वं च यद्यपि जीवस्वरूपमस्ति तथापि तस्य संसारदशायां देहसंयोगात् सूक्ष्माचिच्छक्तियोगाद्वा कार्त्स्न्येनाभिव्यक्तिर्नास्तीति या किल स्वमात्रवेद्यत्वेनाश्चर्यरूपा स्वप्नसृष्टिस्तत्कर्तृत्वं पुरुषोत्तमस्यैवोपपद्यते न जीवस्य । "य एषु सुप्तेषु" इति श्रुतिरपि परमात्मन एव स्वप्नार्थकर्तृत्वं वदत्युपक्रमोपसंहारयोः परमात्मासाधारणधर्मप्रतिपादनात् "तदेव शुक्रं तद्ब्रह्म" इत्यादिभिः ॥

(द्वितीय तदभावाधिकरणम्)

"तदभावो नाडीषु तच्छ्रुतेरात्मनि च ७ अतः प्रबोधोस्मात् ८"

पुरीतद् ब्रह्म नाड्यश्च सुप्तिस्थानतया श्रुताः ।
त्रिकल्पः संग्रहो वैषां विकल्पो नैरपेक्ष्यतः ।
संग्रहः कार्यभेदेनोपपत्तेश्च तथाश्रुतेः ॥

स्वप्नार्थपरीक्षणादनन्तरं सुप्तिस्थानपरीक्षणावसरः प्राप्तस्तथा हि "अथ यत्रैतत्सुप्तः समस्तः संपन्नः स्वप्नं न कं चन विजानात्यासु तदा नाडीषु सृप्तो भवति" इति श्रुतेर्नाडीनां सुप्तिस्थानत्वं प्रतीयते । "अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद हिता नाम नाड्यो हि द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति श्रुतेश्च पुरीततः सुषुप्तिस्थानत्वं प्रतिपाद्यते । "यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति स्वपितीत्याचक्षते" इति श्रुतेश्च ब्रह्मणः सुषुप्तिस्थानत्वं प्रतीयते । नाडीपुरीतद्ब्रह्मणां विकल्पेन सुप्तिस्थानत्वं समुच्चयेन वेति विशये परस्परं निरपेक्षत्वाद् युगपदुक्तस्थानत्रये जीवस्य वृत्त्यसंभवाच्च विकल्पो युक्तः ।

अत्रोच्यते–संग्रह इति । कार्यभेदेन त्रयाणामेव सुषुप्तिस्थानत्वोपपत्तेः, तथाश्रुतेः=त्रयाणामेव सुषुप्तिस्थानत्वेन श्रुतेश्च संग्रहः समुच्चयः । कार्यभेदो हि–नाड्यः प्रासादकार्यं कुर्वन्ति पुरीतत् खट्वाकार्यं करोति ब्रह्म च पर्यङ्ककार्यं करोति । यथा हि गृहे शेते खट्वायां शेते शयने शेतेत्र गृहादीनां समुच्चयो भवति तथात्रापि विज्ञेयम् ॥

---

(तृतीयं कर्मानुस्मृतिशब्दविध्यधिकरणम्)

"स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ९"

सुप्तस्य मुक्तसाम्येन सुप्तादन्यः प्रबुध्यते ।
विध्यनुस्मृतिशब्देभ्यः सुप्तएव प्रबुध्यते ॥

अयमत्र संशयः सुषुप्तेरनन्तरं सुप्तादन्यः प्रबुध्यते स एव सुप्तो

वेति । उक्तश्रुत्या सुप्तस्य परमात्मनि संपन्नस्य मुक्तसाम्यात् सुप्तादन्यः प्रबुध्यते न हि ब्रह्मणि संपन्नस्य पुनः संसारसम्बन्धो युक्तः । अत्रोच्यते सुप्त एवेति । सुप्तस्य मुक्तत्वे मोक्षार्था विधयो ऽनर्थकाः स्युस्तस्मात्सुप्त एव प्रबुध्यते । य एवाहं सुप्तः स एवाहं प्रतिबुद्धोस्मीत्यनुस्मृतेश्च प्रतीयते य एव स्वपिति स एव प्रतिबुध्यत इति । शब्दः=श्रुतिः । "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा मशको वा यद् यद् भवन्ति तथा भवन्ति" यः सुषुप्तेः पूर्वं व्याघ्रो भवति सुषुप्तेरनन्तरं प्रबोधसमये स व्याघ्र एव भवतीत्येवं श्रुतेरर्थः, इति श्रुतेरपि सुप्त एव प्रतिबुध्यत इति प्रतीयते । यदि सुप्तादन्यः प्रतिबुध्येत तदान्येन सुषुप्तिं प्राप्तेन कृतं कर्मान्येन प्रतिबुद्धेन भोक्तव्यं स्यादिति कृतहानिरकृताभ्यागमो दोषोपि स्यादित्युच्यते—स एव प्रतिबुध्यत इति ॥

---

( चतुर्थं मुग्धाधिकरणम् )

" मुग्धेऽर्धसंपत्तिः परिशेषात् १० "

सुप्त्याद्यन्तर्गता मूर्च्छा तत्प्रसिद्ध्युपपत्तितः ।
सुप्त्यादिभ्यः पृथङ् मूर्च्छाऽवस्था तु परिशेषतः ॥

किं मूर्च्छा जाग्रत्स्वप्नसुषुप्तीनामन्यतमावस्थाहोस्विदवस्थान्तरमिति विचिकित्सायां—सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छात्वप्रसिद्ध्युपपत्तेर्मूर्च्छा सुषुप्त्याद्यन्तर्गतावस्थेति प्राप्तेभिधीयते—सुप्त्यादिभ्यः पृथगिति । मूर्च्छा हि न जाग्रदवस्था नापि स्वप्नावस्था ज्ञानाभावात् । नापि सुषुप्तिः । मूर्च्छा ह्यभिघातादिना भवति न हि सुषुप्तेः कारणमभिघातादिः । नापि मरणावस्था मूर्च्छा पुनरपि प्रबोधसंभवात् । न हि मरणादनन्तरं प्रबुध्यते जीवस्तस्मात्परिशेषतो जाग्रत्स्वप्नसुषुप्तिमरणेभ्यः पृथगवस्थान्तरं मूर्च्छा ॥

---

( पञ्चममुभयलिङ्गाधिकरणम् )

" न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ११ भेदादिति चेन्न प्रत्येकमतद्वचनात् १२ अरूपवदेव हि तत्प्रधानत्वात् १४ प्रकाशवच्चावै-

यर्थ्यात् १५ आह च तन्मात्रम् १६ दर्शयति चाथोपि स्मर्यते
१७ अत एव चोपमा सूर्यकादिवत् १८ अम्बुवदग्रहणात्तु न
तथात्वम् १९ वृद्धिह्रासभाक्त्वमन्तरभावादुभयसामञ्ज-
स्यादेवं दर्शनाच्च २० प्रकृतैतावत्त्वं हि प्रतिषेधति
ततो ब्रवीति च भूयः २१ तदव्यक्तमाह हि
२२ अपि संराधने प्रत्यक्षानुमानाभ्याम् २३
प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्म-
ण्यभ्यासात् २४ अतोऽनन्तेन
तथा हि लिङ्गम्"

**जीवदोषाः परंब्रह्म दूषयन्ति न वाथ किम् ।**
**आद्यस्तद्देहसम्बन्धात् परस्तूभयलिङ्गतः ॥**

ये जीवगता दोषा अज्ञानपापजरामरणकामक्रोधादयो हेयत्व-बुद्धिविषयास्ते परं ब्रह्म दूषयन्ति न वा—परमात्मनि विद्यन्ते न वेति सन्देहे विद्यन्त इत्याद्यः पक्षोयुक्तः, तद्देहसम्बन्धात्, यथा हि निर्दो-षमपि जीवं दूषितदेहसम्बन्धाद् दूषयन्ति दोषास्तथा जीवशरीरकं जीवान्तर्यामिणमपि ते दोषा दूषयन्ति उक्तदोषदूषितजीवलक्षण-शरीरसंबन्धादिति पूर्वपक्षे—

अभिधीते-पर इति न दूषयन्तीति पक्षो युक्तस्तत्कस्य हेतोः? उ-भयलिङ्गत इति । निरस्ताखिलदोषत्वेन कल्याणगुणसागरत्वेन चोभयलिङ्गमुभयलक्षणकं ब्रह्माभिधीयते यथा—"अपहतपाप्मा वि-जरो विमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामः सत्यसंक-ल्पः" "समस्तकल्याणगुणात्मकोसौ स्वशक्तिलेशोद्धृतभूतवर्गः" "परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" इति ॥

---

(षष्ठमहिकुण्डलाधिकरणम्)

उभयव्यपदेशात्त्वहिकुण्डलवत् २६ प्रकाशाश्रयवद्वा तेज-
स्त्वात् २७ पूर्ववद्वा २८ प्रतिषेधाच्च २९"

अचितो ब्रह्मरूपत्वं किंस्वरूपमिहेष्यते ? ।
अहिकुण्डलवद् विद्यादुभयव्यपदेशतः ॥
किं वैकजातियोगेन प्रभातद्युक्तयोरिव ।
दुष्टं पक्षद्वयं तस्माज्जीवस्येवांशभावतः ॥

अचिद्वस्तुनो ब्रह्मरूपत्वं किंस्वरूपमिति जिज्ञासायामाशङ्कयते— किमचिद्वस्तुनोहिकुण्डलवद् ब्रह्मरूपत्वं किं वा प्रभाप्रभावतोरिव किं वा जीवस्येवांशांशिभावेनेति, किं युक्तम्? अहिकुण्डलवदिति यथाऽहिकुण्डलं नामरूपाभ्यामहेः पृथग् भवति द्रव्यत्वेनापृथग् भवति द्रव्यैक्यात् तथाऽचिद्वस्त्वपि नामरूपाभ्यां ब्रह्मणो भिन्नं भवति द्रव्यत्वेन चाभिन्नमपि भवति, एवमेवोभयरूपेण व्यपदिश्यते— "ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वम्" इति तादात्म्योपदेशः । "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति भेदव्यपदेशः । किं वा यथा प्रभाप्रभावतोर्भिन्नयोरपि तेजस्त्वेनैक्यमेवमचिद्वस्तुनो ब्रह्मरूपत्वं युक्तम् ।

अत्राह–दुष्टमिति। यद्यहिकुण्डलदृष्टान्तेन ब्रह्मैवाचिद्रूपेणावतिष्ठते तदा ब्रह्मणः परिणामित्वं स्यात् तथा चापरिणामित्ववादिन्यः श्रुतयो भेदवादिन्यश्च बाधिताः स्युरिति प्रथमः पक्षो दुष्टः । द्वितीये च पक्षे गोत्ववद् ब्रह्मैव चिदचिदीश्वरेष्वनुवर्तमानं सामान्यं मन्तव्यं तथा च सकलश्रुतिस्मृतिविरोध इति द्वितीयः पक्षो दुष्टः । तस्माद् यथा जीवो ब्रह्मांशस्तथा विशेषणविशेष्यभावेनाचिद्वस्त्वपि ब्रह्मांश इत्यंशत्वेनाचिद्वस्तुनो ब्रह्मरूपत्वं युक्तम् । तथा च विशिष्टवस्त्वेकदेशत्वेन "ब्रह्मैवेदं सर्वम्" इत्याद्यभेदव्यवहारोऽपि मुख्यः संपन्नः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन "हन्ताहमिमास्तिस्रो देवताः" इत्यादिभेदव्यवहारोऽपि मुख्यः संपन्नः ॥

---

( सप्तमं पराधिकरणम् )

"परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ३० सामान्यात्तु ३१
बुद्ध्यर्थः पादवत् ३२ स्थानविशेषात् प्रकाशादिवत् ३३

उपपत्तेश्च ३४ तथान्यप्रतिषेधात् ३५ अनेन सर्वगत-
त्वमायामशब्दादिभ्यः ३६"

अस्माज्जगन्निदानात् किं तत्त्वमस्ति परं न वा, ।
उन्मानसेतुसम्बन्धभेदानां श्रुतितोस्ति तत्, ॥
उन्मानित्वमुपासार्थमसंभेदाय सेतुता ।
प्राप्यप्रापकसम्बन्धः स्वस्य स्वयमुपायतः ॥
तत्परस्य निषेधाच्च भेदोक्तेर्हेतुता न हि ।
तस्मादस्मात्परं नास्ति श्रुत्यर्थस्य विचारणात् ॥

अस्माज्जगन्निमित्तोपादानकारणाद्ब्रह्मणः परमपि किंचित्तत्त्वमस्ति नवेति विशयेऽस्ति तदित्युच्यते हेतुरुन्मानेत्यादिर्विज्ञेयः । उन्मानं = परिमितिः, "चतुष्पाद् षोडशकलम्" इत्यादौ ब्रह्मोन्मानव्यपदेशादस्यास्मात्परं तत्त्वं यदनुन्मितं स्यात् । तथा—"अथ य आत्मा स सेतुर्विधृतिः" "एतं सेतुं तीर्त्वा विद्धः सन्नविद्धो भवति" इत्यादावस्य ब्रह्मणः सेतुत्वनिरूपणात् । यथा लोके सेतोरन्यं प्राप्यं कूलं परं भवति तथानेन सेतुरूपेण ब्रह्मणा परमपि तत्त्वं प्राप्यमस्तीति विज्ञायते । किं च "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" "अमृतस्यैष सेतुः" इत्यादौ प्राप्यं परं तत्त्वमिदं च ब्रह्म प्रापकं सेतुवदिति प्राप्यप्रापकसम्बन्धव्यपदेशादस्ति परं तत्त्वम् । अपि च "परात्परं पुरुषमुपैति दिव्यम्" "परात्परं यन्महतो महान्तम्" "तेनेदं पूर्णं पुरुषेण सर्वं ततो यदुत्तरतरं तदरूपमनामयम्" इत्यादौ परापरतत्त्वयोर्भेदेन व्यपदेशाद्विज्ञायतेऽस्मात्परमपि तत्त्वमस्तीति ।

अत्रोच्यते—उन्मानित्वमित्यादि । "चतुष्पाद् ब्रह्म षोडशकलम्, पादोस्य विश्वा भूतानि" इत्यादावुन्मानित्वव्यपदेश उपासार्थः, यथाऽपरिच्छिन्नस्याप्याकाशस्य प्रकाशस्य वा घटादिस्थानभेदेन परिच्छिन्नत्वानुसंधानं सम्भवति तथास्य ब्रह्मणोपि परिमितत्वानुसंधानं सम्भवति तच्चोपासनार्थम् । एवं सेतुत्वं च ब्रह्मणोऽसम्भेदायोच्यते लोकानामसंकरकरत्वात् । "अथ य आत्मा स सेतुर्विधृ-

तिरेषां लोकानामसम्भेदाय" इति श्रुतेः। सिनोति बध्नाति स्वस्मिन्सर्वमिति सेतुः। न तु प्रापकत्वात्सेतुत्वमुच्यते। "अमृतस्यैष सेतुः" इत्यादिप्राप्यप्रापकसम्बन्धो हि स्वस्य स्वयमुपायत्वं द्योतयति ब्रह्मप्राप्तौ ब्रह्मैवोपायोऽस्ति नान्यस्तथा श्रूयते च—"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम" इति। न तु परतत्त्वद्योतनार्थः प्राप्य प्रापकसम्बन्ध.। तथा परात्परमित्यादिभेदोक्तेः परतत्त्वसिद्धौ हेतुत्वं नास्ति तत्रैवास्मात्परमात्मनः परस्य तत्त्वस्य प्रतिषेधात्— "यस्मात्परं नापरमस्ति किं चित्" इति। तस्मात्=उन्मानव्यपदेशादीनामुपासनाद्यर्थकत्वादस्मात्परब्रह्मणः परं तत्त्वं किञ्चिदपि नास्ति किं त्विदमेव परं ब्रह्म परं तत्त्वमिति विजयम्॥

---

( अष्टमं फलाधिकरणम् )

"फलमत उपपत्तेः ३७ श्रुतत्वाच्च ३८ धर्मं जैमिनिरत एव ३९ पूर्वं तु बादरायणो हेतुव्यपदेशात् ४०"

पूर्वोत्तरविभागोक्तकर्मणां किं फलप्रदम्।
कर्मैव साधनत्वात्तु श्रुतेर्ब्रह्मोपपत्तितः॥

वेदस्य पूर्वभाग उक्तानां कर्मणां ज्योतिष्टोमादीनामुत्तरभाग उक्तानां कर्मणामुपासनानां च यद् यथायथं फलं स्वर्गादिकं मोक्षश्च तत्प्रदं किं कर्मोत ब्रह्मेति विचिकित्सायां कर्मैवेति युक्तं साधनमेव हि स्वसाध्यफलप्रदं भवति कर्म च साधनं फलस्य तस्मात्कर्मैव फलप्रदम्। अन्यथा कर्मणां वैफल्यं स्यात्।

अत्रोच्यते—श्रुतेरिति, उपपत्तितः श्रुतेश्च ब्रह्मैव फलप्रदम्। उपपत्तिस्तावत् तद् ब्रह्म सर्वज्ञं सर्वशक्तिमदिति कर्मभिराराधितं यथायथं फलं ददातीति। श्रुतिश्च "स वा एष महानज आत्मान्नादो वसुदानः, एषह्येवानन्दयाति" इति। स्मर्यते च "मुक्तिमिच्छेज्जनार्दनात्" इति। कर्माणि तु भगवदाराधनस्वरूपाणि भगवत्प्रसादसम्पादनमात्रेण चरितार्थानि। साक्षाद्भगवदुपासनभिन्नान्यपि कर्मा-

णि सूर्यादिदेवतान्तर्याम्याराधनपराणीति सकलं कर्म तत्तद्देवताशरीरकभगवदाराधनस्वरूपमिति विज्ञेयम् ॥

॥ इति दशमः पादः समाप्तः ॥

## ॥ अथैकादशः पादः ॥

(प्रथम सर्ववेदान्तप्रत्ययाधिकरणम्)

"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् १ भेदान्नेति चेदेकस्यामपि २
स्वाध्यायस्य तथात्वे हि समाचारेधिकाराच्च सववच्च तन्नियमः ३
दर्शयति च ४ उपसंहारोर्थाभेदाद्विधिशेषवत् समाने च ५"

**अभिन्नोपास्यविद्यानां भेदो भेदकभेदतः ।**
**अभेदो रूपसंयोगचोदनाख्याऽविशेषतः ॥**

उपनिषत्सु बह्व उपासनाः श्रूयन्ते यथा—"तान् हो वाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेष्वात्मस्वन्नमत्ति" इति छान्दोग्य५प्रपाठके श्रूयते । एषैव वैश्वानरविद्या वाजसनेयोपनिषदि श्रूयते "अयमग्निर्वैश्वानरो योयमन्तः पुरुषे" इति । एतयोर्वैश्वानरविद्ययोः परस्परं भेद उताभेद इति विशये-भेदकानां प्रकरणादीनां भेदाद् भेद इति युक्तम् ।

अत्रोच्यते—अभेद इति, रूपं=उपास्यो वैश्वानरस्तस्याविशेषात्=ऐक्यात्, एवं संयोगः=फलसम्बन्धो ब्रह्मप्राप्तिलक्षणस्तस्यैक्यात्, चोदना उपासत इत्याद्युपासनालक्षणा तस्या ऐक्याच्च, आख्या=वैश्वनरविद्येति नामधेयं तस्यैक्याच्च–अभिन्नोपास्यविद्यानां परस्परमभेदो विज्ञेयः । एवं छान्दोग्य५प्रपाठके पञ्चाग्निविद्या श्रूयते, वाजसनेयके चाष्टमाध्यायस्य द्वितीयब्राह्मणे पञ्चाग्निविद्या श्रूयते तयोरप्यभेदो विज्ञेयो यत उक्तानां रूपादिनामभेदे विद्यानामभेदो भवति, भेदे च भेदो भवतीति ॥

( द्वितीयमन्यथात्वाधिकरणम् )

"अन्यथात्वं शब्दादिति चेन्नाविशेषात् ६ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ७ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ८ व्याप्तेश्च समञ्जसम् ९"

उद्गीथविद्ययोरैक्यं भेदकानामभेदतः ।
भेदो ह्युपास्यरूपस्य प्रधानस्य प्रभेदतः ॥

"द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति" इत्यारभ्य "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत् ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति" "ततो देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद" इत्येवं वाजसनेयके प्रथमाध्यायस्य तृतीयब्राह्मणे उद्गीथविद्याम्नाता फलं च शत्रुपराभवः । "देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति" इत्यारभ्य—"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वंसेत" इत्येवं च छान्दोग्ये प्रथमप्रपाठकस्य द्वितीयखण्डे उद्गीथविद्याम्नाता । इत्येवमुक्तयोरुद्गीथविद्ययोरभेदः किमुत भेद इति संशये—ऐक्यम् = अभेद इत्युच्यते भेदकानां रूपादीनामभेदात्, रूपं तावदध्यस्तप्राणभाव उद्गीथः स चोभयत्र समान एव । फलं च शत्रुपराभवः सोपि तुल्य एव । आख्या चोद्गीथविद्येति सापि समानेति विद्यैक्यमिति प्राप्ते—

अभिधीयते—भेद इति । उपासनायामुपास्यरूपमेव प्रधानं भवति तच्चोभयत्र विशिष्टमस्ति तथा हि—वाजसनेयके तावत् "अथ हेममासन्यं प्राणमूचुः" इत्यनेनोद्गानकर्तरि प्राणदृष्टिराम्नाता । छान्दोग्ये च "अथ य एवायं मुख्यः प्राणः" इत्यनेनोद्गानकर्मण्युद्गीथे प्राणदृष्टिराम्नातेति रूपभेदे सत्याख्याद्यैक्यस्याकिंचित्करत्वाद् भेद एव । सूत्रकारेण ह्युपरिष्टाद्विद्यैक्यमाशङ्क्यान्यथात्वमित्यनेन विद्याभेदं प्रतिपाद्य पुनरपि 'इति चेन्नाविशेषात्' इत्यनेन विद्यैक्यमुक्त्वा पुनश्च "न वा प्रकरणभेदात्" इत्यनेन विद्याभेदः सिद्धा-

न्तितस्तथा च छान्दोग्य उद्गीथावयवस्य प्रणवस्योपासनमुक्त-मित्यपि विद्याभेदे हेतुरस्तीति विद्याभेद एव नामाऽन्या छन्दोगाना-मुद्गीथविद्या, अन्या च वाजिनामिति ॥

---

( तृतीयं सर्वाभेदाधिकरणम् )

"सर्वाभेदादन्यत्रेमे १०"

कौपीतकीनां प्राणस्य विद्या भिन्ना न वाथ किम् ।
भिन्ना वसिष्ठत्वादीनां गुणानामश्रुतेः श्रुतेः ॥
अभिन्नैषां गुणानां स्यादर्थादत्र प्रतीतितः ।
गुणानुवादमात्रेण विद्या नैव प्रभिद्यते ॥

"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" इत्येवं छन्दोगानां प्राणविद्याम्नायते । "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च, ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद" इत्येवं वाजसनेयकानां प्राणविद्याम्नायते । "अथ हेमा देवताः प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठः" इत्येवं कौपीत-कीनां प्राणविद्याम्नायते । छन्दोगवाजसनेयकयोः प्राणविद्यातः कौपीतकीनां प्राणविद्या भिन्ना किमुताभिन्नेति सन्देहे भिन्नेत्युच्यते कौपीतकिप्राणविद्यायां वसिष्ठत्वादीनां वागादिसम्बन्धिनां गुणा-नां प्राणेऽन्वयाश्रुतेः । छन्दोगवाजसनेयकयोश्च प्राणविद्यायां वागा-दिसम्बन्धिनां गुणानां प्राणेऽन्वयः श्रूयते—"अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोसि" इति । तस्मादेकत्र वसिष्ठत्वा-दिगुणान्वयस्याश्रुतेरन्यत्र श्रुतेश्च रूपभेदाद् भिन्ना कौपतकिप्राणवि-द्येति प्राप्ते—

अभिधीयते—अभिन्नेति । अत्र कौपीतकिप्राणविद्यायामेषां वसि-ष्ठत्वादिगुणानामर्थादेव प्राणेन्वयः प्रतीयते । यैव प्राणविद्या ज्यैष्ठ्या-दिगुणयुक्तप्राणविषया छन्दोगादीनां प्रतीयते सैव प्राणविद्या कौ-पीतकीनामपीति प्रत्यभिज्ञायते ज्यैष्ठ्यादिगुणान्वयश्रवणात् त-

स्मादनुक्तस्य वसिष्ठत्वादिगुणान्वयस्यात्रार्थात्प्रतीतिर्भवति। "यत्र-हं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि" इत्येवं गुणानुवादमात्रं कौषीतकि-भिर्न कृतं नैतावता विद्या भिद्यते तस्मादभिन्ना कौषीतकिप्राणविद्या॥

---

(चतुर्थमानन्दाद्यधिकरणम्)

"आनन्दादयः प्रधानस्य ११ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे १२ इतरे त्वर्थ सामान्यात् १३ आध्यानाय प्रयोजनाभावात् १४ आत्मशब्दाच्च १५ आत्मगृहीतिरितरवदुत्तरात् १६ अन्वयादिति चेत् स्यादवधारणात् १७"

परविद्यासु किं सर्वास्वानन्दाद्युपसंहृतिः।
नास्ति वास्तीति सन्देहे मानाभावेन नास्ति सा।
अस्ति विद्यास्वऽभेदेन गुणिनः परमात्मनः।
न स्यात् कथं स्वरूपस्य प्रतीतेरनुबन्धिनाम्॥

ब्रह्मस्वरूपगुणानामानन्दादीनां सर्वासु परविद्यासु ब्रह्मोपासनासूपसंहारो नास्ति किं वास्तीति? नास्तीति युक्तम्। प्रकरणान्तराधीतानां गुणानां प्रकरणान्तरोक्तोपासनासूपसंहारे प्रमाणाभावात्।

अत्रोच्यते—अस्तीति, आनन्दादीनां ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासूपसंहारोऽस्त्येव। गुणिनः परमात्मनः सर्वासु परविद्यास्वऽभेदात्, स्वरूपप्रतीत्यनुबन्धिनां गुणानामानन्दादीनां कथं नोपसंहारः स्यात्। यथा हि यत्र यत्र घटः प्रतीयते तत्र तत्र कम्बुग्रीवादिमत्त्वमपि प्रतीयते तत्कस्य हेतोः? तस्य घटस्वरूपानुबन्धित्वात् तथा यत्र यत्र विद्यासु ब्रह्मप्रतीतिरस्ति तत्र तत्र स्वरूपानुबन्धिनां गुणानामुपसंहृतिरस्त्येव। कारुण्यादीनां तु गुणानां सर्वत्रोपसंहारो नास्ति स्वरूपानुबन्धित्वाभावात् किं तु यत्र विद्यायामधीतास्तत्रैव। एवं "तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः" इत्यादिप्रियशिरस्त्वादीनामप्युपासनाविशेष एवोपसंहारो विज्ञेयः। आत्मनः सुखप्रतिपत्त्यर्थं रूपणमात्रमिदम्॥

( पञ्चमं कार्याख्यानाधिकरणम् )

"कार्याख्यानादपूर्वम् १८"

आपो वास इति श्रुत्याऽऽचमनं किं विधीयते ।
प्राणवासस्त्वबुद्धिर्वा पूर्वस्तत्प्रत्ययश्रुतेः ॥
परोऽप्राप्तविधानेन शास्त्राणामर्थवत्त्वतः ॥

इदमाम्नायते—"किं मे वासः" इति प्राणेन पृष्टा वागाद्य ऊचुः "आपो वास इति तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते, तस्मादेवं विदशिष्यन्नाचामेदशित्वा चाचामेदेतदेव तदनमनग्नं कुरुते" इति । अत्राचमनं विधीयते किं वाऽप्सु प्राणवासस्त्वानुसंधानं विधीयत इति विशये तत्प्रत्ययश्रुतेः=आचामेदिति विधिप्रत्ययश्रवणादाचमनं विधीयते । अत्रोच्यते पर इति । आचमनं तु श्रुतिस्मृतिभ्यः प्राप्तमेवास्तीति प्राप्तविधानेन शास्त्रस्यार्थवत्त्वाभावात् । अप्राप्तस्य प्राणवासस्त्वानुसन्धानस्य विधानेनार्थवत्त्वादत्राप्सु प्राणवासस्त्वानुसन्धानमेव विधीयते ॥

---

( षष्ठं समानाधिकरणम् )

"समान एवं चाभेदात् १९"

शाण्डिल्यविद्ययोर्भेद उताभेदः, प्रभिन्नता— ।
वशित्वादिगुणानां तु प्रभेदाद्रूपभेदतः ।
परः संकल्पसत्यत्वाद् वशित्वाद्युपसंग्रहात् ॥

वाजसनेयोपनिषद्युभयत्र शाण्डिल्यविद्याम्नायते—"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसंकल्पमाकाशात्मानम्" इति तथा—"मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः" इति सप्तमाध्यायस्य ६ ब्राह्मणे, उक्तयोर्विद्ययोर्भेदो वाऽभेदो वेति सन्देहे भेद एव युक्तो यत एकत्र वशित्वादयो गुणा न श्रूयन्ते परत्र च श्रूयन्ते स-

स्माद्वशित्वादिगुणानां भेदात्—रूपस्योपास्यस्य ब्रह्मणो भेदाद् विद्याभेद इति प्राप्ते ।

अभिधीयते—परः इति, अभेदपक्षो युक्तः । यत्र "स आत्मानम्" इत्यादौ वशित्वादिगुणकीर्तनं नास्ति तत्र तत्रत्यसत्यसंकल्पत्वगुणेन वशित्वादिगुणानामुपसंहारो भवति । सत्यसंकल्पत्वस्य वशित्वादीनां चाभेदात् विद्ययोरप्यभेदो विज्ञेयः ॥

---

(सप्तम सम्बन्धाधिकरणम्)

"संबन्धादेवमन्यत्रापि २० न वा विशेषात् २१
दर्शयति च २२"

वाजिनां ये रहस्याख्योपनिषदौ श्रुते तयोः ।
उभयत्रोपसंहारो नियमाद्वा व्यवस्थितिः ॥
आद्यः शाण्डिल्यविद्यावत् परः स्याद्रूपभेदतः ।
एकत्र ध्येयसन्नाक्षि परत्र रविमण्डलम् ॥

वाजसनेयके सप्तमाध्यायस्य पञ्चमब्राह्मणे श्रूयते—"य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद" इति । तथा—"योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरं स्वरिति प्रतिष्ठा प्रतिष्ठे द्वे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद" इति । येत्र श्रुतेऽहरहमित्युपनिषदौ तयोरुभयत्रोपसंहारो युक्तः किंवा नियमात्=यथोक्तस्थानयोर्व्यवस्थितिरिति विचिकित्सायां—यथा शाण्डिल्यविद्यायां वशित्वादिगुणानामुपसंहारस्तथात्राप्युपनिषदोरुपसंहारो युक्त इतिप्राप्ते—

अभिधीयते—पर इति । नियमेन व्यवस्थितिपक्षो युक्तः । गुणोपसंहारे हि विद्यैक्यं हेतुर्विद्यैक्ये च रूपाद्यभेदो हेतुः शाण्डिल्यविद्यायां रूपाद्यभेदेन विद्यैक्याद् युक्तो गुणोपसंहारो न चैवमत्र विद्यैक्यमस्ति रूपभेदात्=उपास्यभेदात् । तदुच्यते एकत्रेति—एकत्र

विद्यायामुपास्यस्य स्थानमक्षि, अपरत्रोपास्यस्थानं रविमण्डलमिति स्थानभेदेनोपास्यभेदाद्विद्याभेदस्तथा चोक्तोपनिषदोर्नियमेन व्यवस्थितिरेव युक्ता, सूर्यमण्डलस्थोपासनायामेवाहरित्युपनिषत् । अक्षिस्थोपासनायामेवाहमित्युपनिषदिति ॥

---

(अष्टमं संभृत्यधिकरणम्)

"संभृतिद्युव्याप्त्यपि चातः २३"

संभृत्यादिगुणानां किं सर्वत्रैवोपसंहृतिः ।
कासु चिद्वाथ विद्यासु ब्रह्मज्येष्ठा इति श्रुतौ ॥
सर्वत्रैवेति पक्षोऽनारभ्याधीतत्वतो मतः ।
उपसंहारयोग्यायामुपसंहरणात् परः ॥

इदमाम्नायते "ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" इति ब्रह्मैव ज्येष्ठं कारणं येषां तानि ब्रह्मज्येष्ठानि, वीर्याणि पराक्रमविशेषा आकाशोत्पादनादयस्तानि च वीर्याणि संभृतानि निर्विघ्नं संवृद्धानि, तच्च ज्येष्ठं ब्रह्माग्रे देवाद्युत्पत्तेः प्रागेव दिवं स्वर्गमाततान व्याप्तवदित्यर्थः । अत्र वीर्यसंभृतिर्द्युव्याप्तिश्चेत्यादिगुणजातं श्रूयते तेषामेषां गुणानां किं सर्वासु विद्यासूपसंहारः कार्यः किं वा कासु चिदिति विशये सर्वासूपसंहारो युक्तस्तेषां गुणानामनारभ्याधीतत्वात् । यदि कामप्युपासनामारभ्य संभृत्यादिगुणानामध्ययनं स्यात्तदा तत्रैवोपासनायामुपसंहारः स्यान्नचैवमस्तीति प्राप्ते—

उच्यते-पर इति, परः पक्षो युक्तः । यद्यपि संभृत्यादय एते गुणा अनारभ्याधीतास्तथापि यत्र तेषामुपसंहारः संभवत्येव न तत्र कथंकारमुपसंहारः स्यात् । यथा "एष मे आत्मान्तर्हृदये" "दहरं पुण्डरीकं वेश्म" इति शाण्डिल्यविद्यायां दहरविद्यायां चोपास्यस्थानस्यातीवाल्पत्वात्तत्रस्थोपास्ये परब्रह्मणि द्युव्याप्त्यादिकं कथमन्वियात्, तत्संनियोगशिष्टस्य संभृत्यादिगुणस्याप्यत्रोपसंहारो न

युक्त इति सर्वत्रोपसंहारसामर्थ्याभावादुपसंहारयोग्यास्वेव कासुचिद्विद्यासूपसंहारो भवति यत्र विपुलत्वेन ब्रह्मोपास्यते ॥

---

(नवमं पुरुषविद्याधिकरणम्)

"पुरुषविद्यायामपि चेतरेषामनाम्नानात् २४"

पुरुषविद्ययोरैक्यं रूपभेदाद्यऽभावतः ।
गुणाम्नानस्य भेदेन भेदो रूपादिभेदतः ॥

तैत्तिरीयके पुरुषविद्याम्नायते–" तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः" इति। तथा छान्दोग्ये तृतीयप्रपाठकस्य १६खण्डेपि पुरुषविद्याम्नायते– "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत्प्रातः सवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वा व वसव एते हीदं सर्वं वासयन्ति" इति । अत्रोक्तयोः पुरुषविद्ययोरभेदो वा भेदो वेति संदेहः किं युक्तम् ? अभेद इत्येव यत उभयत्र पुरुषविद्येत्याख्यैकैव तथा पुरुषस्य यज्ञत्वेन रूपेणोपासनस्याविशेषाद्रूपैक्यमप्यस्तीति विद्ययोरैक्ये प्राप्ते—

अभिधीयते–भेदइति । छान्दोग्ये हि पुरुषायुस्त्रेधा विभज्य तत् प्रातर्माध्यन्दिनसायंसवनत्वेन रूपितं न चैवं रूपणं तैत्तिरीयकेस्तीत्यादिरूपभेदात्, तथा तैत्तिरीयपुरुषविद्याया ब्रह्मप्राप्तिरेवफलम् । छान्दोग्यपुरुषविद्यायास्त्वायुर्वृद्धिरेव फलम्–" षोडशं वर्षशतं जीवति य एवं वेद" इति । तस्माद् गुणाम्नानभेदकृतरूपभेदाद्विद्ययोर्भेद एव ॥

---

(दशमं वेधाद्यधिकरणम्)

"वेधाद्यर्थभेदात् २५"

शुक्रं प्रविध्येत्यादीनां मन्त्राणां ब्रह्मवेदने ।
अङ्गतास्ति न वा, चैवं प्रवर्ग्यादिककर्मणाम्, ॥

विद्याऽभ्यग्रे समाम्नानादन्यत्राऽविनियोगतः ।
अङ्गतास्ति, न सामर्थ्यादन्यशेषत्ववित्तितः ॥

"शुक्रं प्रविध्य हृदयं प्रविध्य" इत्यादीन् मन्त्रानाथर्वणिका आमनन्ति, तथा "देव सवितः प्रसुव यज्ञं प्रसुव" इत्यादीन् मन्त्रान् सामगाः समामनन्ति, "शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा" इत्यादीन् काठकास्तैत्तिरीयकाश्चामनन्ति तेषां मन्त्राणां प्रवर्ग्यादीनां कर्मणां च ब्रह्मवेदने = ब्रह्मविद्याविषयकमङ्गत्वमस्ति न वेति विचिकित्सायां किं युक्तम्? अस्त्यङ्गतेति हेतुरुच्यते विद्येति तेषां मन्त्राणां विद्याभ्यग्रे = ब्रह्मविद्यासन्निधौ समाम्नानादन्यत्र तेषां विनियोगाभावाद्वैयर्थ्यं स्यादिति युक्तं ब्रह्मविद्याङ्गत्वम् । एवं प्रवर्ग्यादीनां कर्मणामप्यङ्गत्वमित्यत्र—

उच्यते नेति । "शुक्रं प्रविध्य हृदयं प्रविध्य" इति प्रवेधनलक्षणमन्त्रसामर्थ्यादेव शुक्रं प्रविध्येत्यादीनां मन्त्राणामभिचारशेषत्वप्रतीतेरभिचाराङ्गत्वमेव न विद्याङ्गत्वम् । एवं शं नो मित्र इत्यादीनां मन्त्राणां सामर्थ्यादध्ययनशेषत्वप्रतीतेरध्ययनाङ्गत्वमेव न विद्याङ्गत्वम् । प्रवर्ग्यादिकर्मणां च ज्योतिष्टोमादियागाङ्गत्वमवधेयम् ॥

---

(एकादशं हान्यधिकरणम्)

"हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् २६"

पुण्यदुष्कृतयोर्हानोपादानोभयचिन्तनम् ।
विकल्पेन यथोक्तं स्यादुपसंहारतोथ वा ॥
पृथगाम्नानसामर्थ्याद् विकल्पस्तूपसंहृतिः ।
हानवाक्यावशेषत्वादुपादानश्रुतेर्मतात् ॥

छान्दोग्येष्टमप्रपाठके १३ खण्डे श्रूयते—"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति । मुण्डकोपनिषदि तृतीयमुण्डकप्रथ-

मखण्डे श्रूयते–"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति। कौषीतक्युपनिषदि प्रथमाध्याये श्रूयते–"स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यऽप्रिया दुष्कृतम्" इति।

एवं क्व चित्पुण्यपापयोः परित्यागमात्रं श्रूयते क्व चिद् विदुषा नयोः परित्यागस्त्यक्तयोः प्रियाप्रियैरुपादानं च यथा कौषीतक्युपनिषदि। तेषां हानोपादानानां सर्वविद्याङ्गत्वमस्तीति तच्चिन्तनं कार्यम्। तच्च हानचिन्तनमुपादानचिन्तनं हानोपादानोभयचिन्तनं च विकल्पेन कार्यं यथा–छान्दोग्ये मुण्डके च हानमात्रमुच्यते तत्रोक्तविद्यासु हानमात्रचिन्तनं कार्यम्। अन्यत्र "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इत्युपादानमात्रं श्रूयते तत्रोक्तविद्यासूपादानमात्रचिन्तनं कार्यम्। कौषीतक्युपनिषदि हानोपादाने द्व एव श्रूयेते तत्रोक्तविद्यासूभयचिन्तनं कार्यमिति। किं वोपसंहारेण चिन्तनं कार्यं यथा–सर्वत्र विद्यासु हानोपादानयोरुभयोरेव चिन्तनं कार्यमिति। किं युक्तं विकल्पेनेति, यद्युपसंहारेण चिन्तनमिष्टं स्यात्तदा सर्वत्र हानोपादानयोरुभयोरेव श्रवणं स्यान्न चैवमस्ति। किं वा कौषीतकिवाक्यनैवोभयोर्हानोपादनयोश्चिन्तनस्य प्राप्तत्वादन्यत्र हानश्रवणमुपादानश्रवणं चानर्थकं स्यादिति विकल्पेन चिन्तनं युक्तं येन केवलहानस्योपादानस्य च श्रवणं सार्थकं स्यात्।

अत्रोच्यते–उपसंहृतिरिति, उपसंहारेणैव चिन्तनं युक्तम्। उपादानवाक्यस्य हानवाक्यशेषत्वात्। अयंभावः–परेण परित्यागं विनोपादानं न सम्भवतीत्युपादानमात्रोक्तिस्थले हानमर्थादाक्षिप्तं भवति। परित्यक्तयोरपि विदुषा पुण्यपापयोः केन चिदुपभोगोवश्यं भावीति हानमात्रोक्तिस्थल उपादानमर्थादाक्षिप्तं भवति। सम्भवत्यां गतौ च विकल्पो न युक्तोष्टदोषदुष्टत्वात् तथा हि–हानचिन्तनवेलायाम्–१ उपादानचिन्तनस्थले त्यक्तस्य हानशास्त्रप्रामाण्यस्य स्वीकारः, २ स्वीकृतस्य हानशास्त्राप्रामाण्यस्य परित्यागः ३ स्वीकृतस्योपादानशास्त्रप्रामाण्यस्य परित्यागः, ४ उपादानशास्त्रेऽविद्यमानस्याप्रामाण्यस्य कल्पनम्, एवम्–उपादानचिन्तनवेलायाम्–५ हानचिन्त-

नस्थले त्यक्तस्योपादानशास्त्रप्रामाण्यस्य स्वीकारः, ६ स्वीकृतस्योपादानशास्त्राप्रामाण्यस्य परित्यागः, ७ स्वीकृतस्य हानशास्त्रप्रामाण्यस्य परित्यागः, ८ अस्वीकृतस्य च हानशास्त्राप्रामाण्यस्य स्वीकार इति तस्मादुपसंहारपक्ष एव युक्तः ॥

---

( द्वादशं सांपरायाधिकरणम् )

" सांपराये तर्त्तव्याभावात्तथा ह्यन्ये २७ छन्दत उभयाविरोधात् २८ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः २९ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३० यावदधिकारमवस्थितिराधिकारिकाणाम् ३१ "

**सांपराये तु छन्दोगो मार्गे कौषीतकिश्रुतिः ।**
**कर्मत्यागं वदत्यस्मादुभयत्रैव संमतः ।**
**सांपराये मतोऽभावाद् भोक्तव्यसुखदुःखयोः ॥**

हानोपादानविषययोः सुकृतदुष्कृतयोः क्व विदुषा परित्यागः क्रियत इति विचार्यते । तत्र "अश्व इव रोमाणि विधूय पापम्" इति छान्दोग्यश्रुतेस्तु देहवियोगकाल एव कर्मपरित्यागो बुध्यते । एवं "स आगच्छति विरजां नदीं तां मनसात्येति तत्सुकृतदुष्कृते विधुनुते" इति कौषीतकिश्रुतेस्तु ब्रह्मलोकस्य मार्गे कर्मपरित्यागः प्रतीयते । उभयोश्च श्रुत्योः समानबलत्वादुभयत्रैव कर्मपरित्यागः संमतस्तथा च केषां चित्कर्मणां सांपराये = देहवियोगकाले परित्यागो भवति, अवशिष्टानां च कर्मणां मार्गे = विरजानदीतीरे परित्यागो भवतीति पूर्वपक्षे—

उच्यते—सांपराय इति । सांपरय एव सर्वेषां कर्मणां विदुषा परित्यागः संमतः । हेतुरुच्यतेऽभावादिति । कर्मसम्बन्धो हि भोक्तव्ययोः सुखदुःखयोर्भोगायापेक्ष्यते न च देहवियोगादनन्तरं विदुषा कर्मफलं सुखादिकं किं चिद् भोक्तव्यमस्ति यदर्थं देहवियोगादन-

न्तरमपि कर्मसम्बन्धो युक्त्यावहः स्यात् । परधामप्राप्तौ च भगवत्कृपैव हेतुर्न कर्म । श्रूयते च "अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः, एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते तस्य तावदेव चिरं यावन्न विमोक्ष्य अथ सम्पत्स्ये" इति। देवयानेन गमनाय सूक्ष्मं शरीरं तु कर्मक्षयेऽपि विद्याबलादेव तिष्ठति। एषा वै सामान्यविदुषां वार्ता। ये च विद्वांसोऽधिकारिणस्तेषां तु न देहवियोगमात्रेण प्रियाप्रियस्पर्शवियोगो भवति किं त्वधिकारसमाप्त्यनन्तरभाविदेहवियोगादनन्तरमिति ज्ञेयं तदुक्तं "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति ॥

---

(त्रयोदशमनियमाधिकरणम्)

"अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ३२"

अर्चिरादिगतिर्यत्रोपासनेषु श्रुता तया ।
तन्निष्ठस्यैव तत्प्राप्तिरितरत्र तदश्रुतेः ।
सर्वविद्याप्रतिष्ठानां तयैव गमनं श्रुतेः ॥

क्वचिद् विद्याम्नानादन्तरमर्चिरादिगतिः श्रूयते यथा छान्दोग्ये पञ्चाग्निविद्यायाम् । क्वचिच्च न श्रूयते यथा तत्रैव प्राणविद्यायाम् । यत्रार्चिरादिगतिः श्रूयते तन्निष्ठानामेवार्चिरादिगत्या ब्रह्मप्राप्तिर्भवति किं वा सर्वब्रह्मविद्यानिष्ठानामिति विशये तन्निष्ठानामेवेति नियमो युक्तः। इतरत्र प्राणादिविद्यासु तस्या अर्चिरादिगतेरश्रुतेः। यदि सर्वब्रह्मविद्यानिष्ठानामर्चिरादिगत्यैव ब्रह्मप्राप्तिरनुमता स्यात्तदा सर्वत्रैव विद्याम्नानावसानेष्वर्चिरादिगतिः श्रूयेत न चैवमस्तीति नियमे प्राप्ते—

ब्रूमः—सर्वविद्येति ब्रह्मसर्वविद्यानिष्ठस्यार्चिरादिगत्यैव ब्रह्मप्राप्तिः श्रूयते यथा—यत्र प्राणादिविद्यास्वर्चिरादिगतिर्नापि श्रूयते तन्निष्ठानामप्यर्चिरादिगत्यैव ब्रह्मप्राप्तिरिति। यथा—"तद् ये इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽह-

रन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाँस्तान्" इति छान्दोग्यस्य पञ्चमप्रपाठकस्य १० खण्डे । अत्र 'श्रद्धा तप इत्युपासते, इत्यनेन सर्वान् ब्रह्मोपासकानुद्दिश्य ब्रह्मप्राप्तावर्चिरादिगतिरुपदिश्यते । एवं वाजसनेयाष्टमाध्यायस्य द्वितीयब्राह्मणेपि श्रूयते "ते ये एव मेतद्विदुर्ये चामी अरण्यं श्रद्धां सत्यमुपासते तेर्चिरभिसम्भवन्ति" इति ॥

---

(चतुर्दशमक्षरध्यधिकरणम्)

"अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ३३
इयदामननात् ३४"

सर्वविद्यास्वऽसम्बन्धा अस्थूलत्वादयो गुणाः ।
अस्वरूपानुबन्धित्वान्न मानमुपसंहृतौ ।
सर्वविद्यासु सम्बन्धा ब्रह्मासाधारणत्वतः ॥

बृहदारण्यकस्य पञ्चमाध्यायाष्टमब्राह्मणेऽक्षरविद्यायाम्—"स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इत्यस्थूलत्वादयो गुणा ब्रह्मणः श्रूयन्ते । तथा—मुण्डकोपनिषदि प्रथममुण्डके श्रूयते—"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्" इति । एतेऽस्थूलत्वादयो गुणाः किं यत्राक्षरविद्यादौ श्रुतास्तत्रैव सम्बध्यन्ते किं वा यत्र प्राणपञ्चाग्न्यादिविद्यायां न श्रुतास्तत्रापि सम्बध्यन्तेसौ सन्देहः किं युक्तम्? यत्र श्रुतास्तत्रैव, अन्यत्र प्राणविद्यादावुपसंहारे प्रमाणं नास्ति, किं चानन्दादीनां गुणानां सर्वत्र विद्यासूपसंहारः स्वरूपानुबन्धित्वाद्भवति न तथाऽस्थूलत्वादीनां प्रपञ्चप्रत्यनीकानां गुणानां स्वरूपानुबन्धित्वमस्तीत्याह—अस्वरूपानुबन्धित्वादिति ।

अत्रोच्यते सर्वेति । सर्वासु विद्यासु सम्बन्धा अस्थूलत्वादयो गुणा एषामस्थूलत्वादीनां गुणानां ब्रह्मासाधारणत्वात् । आनन्दादयस्तु लेशतो जीवेपि सन्त्यतेति न तेषां ब्रह्मासाधारणगुणत्वम् ।

अस्थूलत्वादीनां त्वैकान्तिकं ब्रह्मासाधारणगुणत्वं तस्मात् सकलासु ब्रह्मविद्यास्वुपसंहारो युक्त एवास्थूलत्वादिगुणानामन्यथाऽसाधारणाकारोपसनायां किंगुणविशिष्टं ब्रह्मोपास्येत ॥

---

(पञ्चत्रिंशमन्तरत्वाधिकरणम्)

"अन्तराभूतग्रामवत् स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चेन्नोपदेशवत् ३५
व्यतिहारो विंशिषन्ति हीतरवत् ३६ सैव हि सत्यादयः ३७"

कहोलोपस्तयोर्विद्ये भिन्ने रूपस्य भेदतः ।
अभिन्न उभयत्रापि यतः प्रश्नोत्तरे परे ॥

बृहदारण्यकस्य पञ्चमाध्याय ४ ब्राह्मणे श्रूयते—"अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व इत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः? यः प्राणेन प्राणिति स ते आत्मा सर्वान्तरः" इति । पुनश्च—"कतमो याज्ञवल्क्य सर्वान्तरः" इत्युषस्तेन पृष्टो याज्ञवल्क्य उवाच—"न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष ते आत्मा सर्वान्तरोऽतोऽन्यदार्त्तम्" इति ।

तथा—"अथैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः? योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति । उक्ते उषस्तकहोलविद्ये किं भिन्न उताभिन्ने इति संशये भिन्न इत्येव युक्तम् । प्रश्नप्रतिवचनयोर्भेदेन रूपभेदात् । प्रश्नस्यैकरूपत्वेऽपि प्रतिवचनभेदस्तु स्फुट एव पूर्वत्र प्राणादिकर्तृत्वेन परमात्मोपदिश्यते, उत्तरत्र त्वशनायापिपासादिरहितत्वेनोपदिश्यत इत्येवं विद्याभेदे प्राप्ते—

उच्यते—अभिन्न इति । उभयत्रैव प्रश्नौ तथोत्तरे च परमात्मानं विषयी कुरुत इत्यभिन्ने विद्ये कहोलोपस्तयोः । न चापि

रूपभेद उक्तयोरुभयोरपि प्रतिवचनयोरेकवाक्यत्वात् प्राणनकर्तृत्वा-दशनायाराहित्यादिगुणानामुभयत्रैवोपसंहारादुभयत्रत्यगुणविशिष्ट-मेवोभयत्रोपास्यत्वेन ब्रह्मोपदिश्यते तस्मादभिन्ने कहोलोषस्तविद्ये ॥

---

(षोडशं कामाद्यधिकरणम्)

"कामादीतरत्र तत्र चायतनादिभ्यः ३८ आदरादलोपः ३९
उपस्थितेऽतस्तद्वचनात् ४०"

**ताण्डिनां वाजिनां भिन्ने दहरोपासने न किम् ।**
**रूपभेदेन भिन्ने, नो-सत्कामाद्येकरूपतः ॥**

ताण्डिनश्छन्दोगास्तेषामुपनिषदोऽष्टमप्रपाठकारम्भे दहरविद्या श्रूयते "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति" इति । वाजिनामुपनिषदः षष्ठाध्याय ४ ब्राह्मणेऽपि दहरविद्या श्रूयते-"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिँश्छेते" इति । अनयोर्दहरविद्ययोर्भेद एव युक्तो रूपभेदात्-छान्दोग्ये हि "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति गुणाष्टकविशिष्टं ब्रह्मोपास्यत्वेनोपदिश्यते । वाजसनेये तु "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इति वशित्वादिगुणविशिष्टमुपास्यत्वेनोपदिश्यते ।

अत्रोच्यते-नेति । वशित्वादयो हि गुणाः सत्यसंकल्पत्वगुणस्यावान्तरभेदा एवेति सामान्यं सत्यसंकल्पत्वं प्राप्तं तेन च स्वसंनियोगशिष्टा अपहतपाप्मत्वादयो गुणा आक्षिप्यन्त इति सत्यकामत्वादिलक्षणैकरूप्यादभेदो विद्ययोस्तथा-हृदयायतनत्वादिभिश्च प्रत्यभिज्ञायत उभयत्रैकैव विद्येति ॥

---

(सप्तदशं तन्निर्धारणानियमाधिकरणम्)

"तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ४१"

कर्माङ्गमाश्रिता विद्याऽवश्यं नेयात्र कर्मसु ।
यागफलात्फलस्याऽस्याः कल्पनाऽयोगतः पृथक् ॥
विद्या नेयात्र नावश्यमविद्यस्यापि तत्कृतेः ।
वीर्यवत्त्वं ह्यनङ्गत्वाद्विद्यायास्तु फलं पृथक् ॥

छान्दोग्यारम्भे श्रूयते–"ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम्" इत्येवमादीनि कर्माङ्गमाश्रितानि = कर्माङ्गं य उद्गीथस्तद्विषयकाणि उपासनानि श्रूयन्ते तेषां कर्मस्ववश्यमुपसंहारः कार्योऽनियमेन वेति विचिकित्सायामवश्यमित्युच्यते, हेतुर्यागेत्यादिः, अस्या उद्गीथादिविद्याया यागफलात् पृथक् फलकल्पनाऽयोगात् । इदमैदंपर्यम्–प्रयाजादीनां ज्योतिष्टोमादिफलात् पृथक् फलस्य कल्पना न भवति तत्कस्य हेतोः? प्रयाजादीनां ज्योतिष्टोमाद्यङ्गत्वात्, एवं विद्याया अपि पृथक् फलकल्पनाभावो विद्याया प्रधानकर्माङ्गत्वं द्योतयति, अङ्गानि चावश्यमनुष्ठेयानि भवन्तीति नैयामिक उपसंहार उपासनानां कर्मसु ।

अत्रोच्यते–विद्येति–अत्र कर्मसु विद्यावश्यं न नेया = नियमेन नोपसंहार्या, अविद्यस्यापि = उद्गीथाद्युपासनहीनस्यापि कर्मानुष्ठानश्रुतेः–"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" इति । एवमविद्यस्यापि कर्मानुष्ठानश्रुतेर्विद्यायाः कर्मानङ्गत्वं प्राप्तमनङ्गत्वाच्च न नियमेनोपसंहारः किं त्वैच्छिकः । एवं हि विद्यायाः फलमपि गोदोहनादिवत् प्रधानकर्मफलात् पृथगेव वीर्यवत्तरत्वं विज्ञेयं तथा श्रूयते–"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति वीर्यवत्तरत्वं च कर्मफलस्याप्रतिबन्धस्तदाह सूत्रकारः–"पृथग्घ्यप्रतिबन्धः फलम्" धियो विद्याया अप्रतिबन्धलक्षणं फलं कर्मफलात् पृथगित्यर्थः ॥

---

( अष्टादशं प्रदानाधिकरणम् )

"प्रदानवदेव तदुक्तम् ४२"

गुणचिन्तनकाले तद्विशिष्टब्रह्मचिन्तनम् ।
न कार्यमथ वा कार्यं नेति तच्चिन्तनं विना—॥
गुणचिन्तनसामर्थ्यात्, कार्यं हि ब्रह्मचिन्तनम् ।
गुणानां गुणिपर्यन्तं चिन्तनं विहितं यतः ॥

छान्दोग्यस्याष्टमप्रपाठके दहरविद्यायां—"तद् य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इति दहरोपासनादनन्तरं सत्यकामत्वादीनां परमात्मगुणानामप्युपासनं चिन्तनं विहितम् । तत्र गुणचिन्तनकाले तत्तद्गुणविशिष्टं ब्रह्म न चिन्तनीयं चिन्तनीयं वेति सन्देहः किं युक्तम्? न चिन्तनीयमिति तदाह नेतीति तच्चिन्तनं = ब्रह्मचिन्तनं विनापि गुणानामनुसन्धातुं शक्यत्वादित्याह गुणचिन्तनसामर्थ्यादिति ।

अत्रोच्यते—कार्यमिति गुणचिन्तनसमयेपि ब्रह्मचिन्तनं कार्यं ब्रह्माश्रितानां सत्यसंकल्पत्वादीनां गुणानां ब्रह्मविशेषणत्वेन चिन्तनं कार्यं यतः—सत्यान् कामानिहात्मानमनुविद्येत्यनेन गुणानां चिन्तनं गुणिपर्यन्तं = तद्गुणविशिष्टब्रह्मचिन्तनपर्यन्तं विधीयते । अन्यथा दहरविद्याशेषे "तद्य" इत्यादिगुणचिन्तनविधानं न स्यात् ॥

---

( एकोनविंशं लिङ्गभूयस्त्वाधिकरणम् )

"लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ४३"

सहस्रशीर्षवाक्येन किमुपास्यं विधीयते ।
दहरोपासनोपास्यमेकं प्रकरणं यतः ॥
सकलोपासनोपास्यं लिङ्गभूयस्त्वहेतुतः ॥

नारायणोपनिषदि श्रूयते—"सहस्रशीर्षं देवं विश्वाक्षं विश्वसम्भवम्" इत्यारभ्य "स ब्रह्म स शिवः सोक्षरः परमः स्वराट्" इत्येवमन्तम् । इत्यनेन वाक्येन किं पूर्वप्रकृतदहरविद्योपास्यं ब्रह्म निर्धार्यते किमुत वेदान्तोक्तसकलपरविद्योपास्यमिति विशये दहरविद्योपास्यमिति युक्तम् । यतः पूर्वानुवाके दहरविद्याम्नाता—"द-

हरं त्रिपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति । एतया च दहरविद्यया सहोक्तब्रह्मस्वरूपप्रतिपादकवाक्यस्य प्रकरणैक्यं । तस्मात्प्रकरणैक्याद् दहरविद्योपास्यब्रह्मस्वरूपं प्रतिपाद्यते सहस्रशीर्षं देवमित्यादिना ।

अत्राभिधीयते—सकलेति । सहस्रशीर्षमित्यादिना वाक्येन सकलपरविद्योपास्यब्रह्मस्वरूपं प्रतिपाद्यते लिङ्गभूयस्त्वात्, अत्रार्थे भूयांसि लिङ्गान्युपलभ्यन्ते परविद्यासु सर्वत्र शिवाक्षरशम्भुब्रह्मेत्यादिशब्दैरेवोपास्यं निर्दिश्यते स एव सकलपरविद्योपास्यं ब्रह्मात्र प्रत्यभिज्ञायते तस्य चात्र नारायणत्वं विधीयत इति न दहरविद्यामात्रोपास्यस्वरूपं प्रतिपाद्यते प्रमाणाभावात् । लिङ्गस्य च प्रकरणापेक्षया बलीयस्त्वात् । दहरविद्याऽसाधारणमुपास्यं तु "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यनेनोक्तमेवेति दहरविद्यायाः स्वासाधारणोपास्ये निराकाङ्क्षत्वात् सहस्रशीर्षमित्यादिना सकलपरविद्योपास्यस्वरूपं विशोध्यते न दहरविद्यामात्रोपास्यस्वरूपम् ॥

---

(विंशतितमं पूर्वविकल्पाधिकरणम्)

"पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ४४ अतिदेशाच्च ४५ विद्यैव तु निर्धारणाद्दर्शनाच्च ४६ श्रुत्यादिबलीयस्त्वाच्च न बाधः ४७ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ४८ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ४९ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ५०"

मनश्चितादिवन्हीनामुपयोगः क्रियासु यत्—।
इष्टकैस्तु चितस्याग्नेः प्रकरणेन संग्रहः ॥
विद्यायामुपयोगोस्ति विद्यारूपत्वदर्शनात् ॥

अग्निरहस्यब्राह्मणे मनश्चितादयोऽग्नयः श्रूयन्ते—"मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति ।

किमेतेषां मनश्चिताद्यग्नीनां क्रियासूपयोगः किं वा विद्यासु=क्रियारूपा वा विद्यारूपा वेत्यर्थः । उक्तसन्देहे क्रियासूपयोग इत्युच्यते यत्=यस्माद्धेतोः पूर्वत्रेष्टकचिताग्निः प्रकृतोस्ति तस्य च प्रकरणेन मनश्चितादयोपि संगृह्यन्ते प्रकरणैक्यात् । तथा चेष्टकचितस्याग्नेः क्रियाङ्गत्वात् क्रियासु यथोपयोगस्तथा मनश्चितादीनामपि क्रियासूपयोगः । न चैकस्मिन्नेव प्रकरण उक्तेष्वग्निष्विष्टकचितस्य क्रियासूपयोगो मनश्चितादीनां विद्यासूपयोग इति वैषम्यं युक्तम् ।

अत्रोच्यते-विद्यायामिति मनश्चितादीनामग्नीनां विद्यास्वेवोपयोगो विद्यारूपत्वमित्यर्थः । प्रकरणापेक्षया श्रुतिर्बलीयसी तया चैषां विद्यारूपत्वमुच्यते-"ते हैते विद्याचिता एव विद्यया हैवैते एवं विदश्चिता भवन्ति" इति । विद्यारूपत्वदर्शनात्=विद्यारूपत्वश्रवणात् । विद्यारूपे एव क्रतावेषामुपयोगः श्रूयते-"ते मनसैवाधीयन्त मनसैवाचीयन्त मनसैषु ग्रहा अगृह्यन्त मनसास्तुवन्त मनसा संशन् मनसा पश्यति यत् किं चिद् यज्ञे कर्म क्रियते यत् किं च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत" इति ॥

---

(एकविंशं शरीरे भावाधिकरणम्)

"एक आत्मनः शरीरे भावात् ५१ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ५२"

चेतनत्वादिरूपेण हतपाप्मादिनाथ वा ।
जीवस्य चिन्तनं कार्यं ब्रह्मचिन्तनतत्परैः ।
आद्यः शरीरसम्बन्धाद् यथाक्रतुनयात् परः ॥

संप्रज्ञातोपासनं हि ध्येयं ध्यानं ध्यातेति त्रिपुटीलक्षणं भवतीति संप्रति ध्यातुर्जीवस्य स्वरूपचिन्तनं प्रस्तूयते-ब्रह्मचिन्तयता जनेन जीवस्य स्वस्य किं चेतनत्वादिना=ज्ञातृत्वभोक्तृत्वादिनैव रूपेण चिन्तनं कर्तव्यं किं वाऽपहतपाप्मत्वादिना रूपेण यदुक्तम्-"अयमात्मापहतपाप्मा" इत्यादिरूपम् । किं युक्तम् ? आद्यः पक्ष इति शरीरे वर्तमानस्यात्मनोपहतपाप्मत्वादिना रूपेण चिन्तनमेव न स-

म्भवति शरीरस्यैव पाप्मनिदानत्वात्। ज्ञातृत्वादिरूपेणापि चिन्तने कृते तत्फलसिद्धिरुपपद्यते।

अत्रोच्यते—यथाक्रतुनयादिति। यथाक्रतुन्यायात् यथानुसन्धीयते तथैव प्राप्यत इति अपहतपाप्मत्वादिना रूपेणानुसन्धानाभावेऽपहतपाप्मत्वमात्मनो रूपं प्रेत्यापि नोपलभ्येत। तदाह श्रुतिः—"यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति। यथाक्रतुः= यथोपासनः। तस्माद् यथा ज्ञातृत्वादिना रूपेणानुसन्धेयस्तथात्माऽपहतपाप्मत्वादिनापिरूपेणावश्यमनुसन्धेयस्तेषामप्यात्मस्वरूपत्वात्॥

---

(द्वात्रिंशमङ्गावबद्धाधिकरणम्)

"अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ५३ मन्त्रादिवद्वाऽविरोधः ५४"

कर्माङ्गमाश्रिता विद्याः स्वोक्तशाखासु यन्त्रिताः।
तत्तत्स्वरयुतोद्गीथादिर्यतस्तत्र यन्त्रितः।
सर्वशाखासु सम्बद्धा उद्गीथाद्युपलब्धितः॥

"ओमित्येतदक्षरमुद्गीथमुपासीत, लोकेषु पञ्चविधं सामोपासीत" इत्यादयः कर्माङ्गाश्रिता उपासनाः श्रूयन्ते, ताः किं स्वयमुक्ता यत्र शाखासु तत्रैव यन्त्रिताः=नियताः किं वा सर्वासु शाखासु यत्र यत्र तासां विषय उद्गीथादिरस्ति तत्र तत्र सम्बध्यन्ते। किं युक्तम्? यत्र शाखासु श्रुतास्तत्रैव नियता यतस्तासामुपासनानां तत्तत्स्वरविशेषयुत उद्गीथादिरेव विषयः स च तत्रैवोपलभ्यते, अन्यत्र शाखासु तूद्गीथादिर्न तत्तत्स्वरविशेषयुत उपलभ्यते अन्यशाखासूद्गीथस्य स्वरान्तरपुरस्कृतत्वादिति नियमे प्राप्ते—

अभिधीयते—सर्वेति, सर्वशाखासु विद्याः सम्बद्धाः। यतः "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिश्रुत्योद्गीथादिमात्रस्योपासनाकर्मत्वमुक्तं न तु तत्तत्स्वरविशेषपुरस्कृतस्योद्गीथादेः। तस्मात् यत्र यत्र शाखासूद्गीथादय उपलभ्यन्ते तत्रतत्र कर्माङ्गाश्रिता विद्याः प्राप्नुवन्त्येव। यथान्यत्रोक्तानामपि मन्त्रादीनामन्यत्र विनियोगो भवति तथात्रापि विज्ञेयम्॥

( त्रयोविंशं भूमज्यायस्त्वाधिकरणम )

"भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ५५"

वैश्वानरस्य व्यस्तस्योपासनं स्याद् दिवादिना ।
व्यस्ताङ्गपूपदिष्टत्वात् फलस्योपासनस्य च ॥
पृथक् तत्फलनिर्देशात् समस्तश्चाप्युपास्यताम् ।
अष्टानामपि खण्डानां वाक्यैक्येन समस्तकः ॥

छान्दोग्यस्य पञ्चमप्रपाठक एकादशखण्डमारभ्याष्टादशखण्ड-पर्यन्तं वैश्वानरविद्याम्नाता तस्य त्रैलोक्यशरीरस्य वैश्वानरस्य द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ, इत्येवं रूपणं श्रूयते-"मूर्धा त्वेष आत्मनः, चक्षुस्त्वेतदात्मनः" इत्यादिः। अयमत्र सन्देहः किमयं वैश्वानरो दिवादिभागैर्व्यस्त एवोपास्यः किं वा व्यस्तश्च समस्तश्चाहोस्वित् समस्त एव। पूर्वपक्षी वदति व्यस्त एवेति व्यस्ताङ्गेषु=व्यस्तेष्वङ्गेषु मूर्धादिरूपदिवादिषूपासनस्य तत्फलस्य चोपदिष्टत्वाद् यथा-"औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते, अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच" इति।

अपरस्तु प्रतिपादयति व्यस्तवत् समस्तोपि=दिवादिरूपमूर्धादिपादपर्यन्तं सकलावयवविशिष्टोप्युपास्यः। व्यस्तोपासनफलवत् समस्तोपासनफलस्यापि पृथङ् निर्देशात् तथा हि—"तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ, यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति।

सिद्धान्ती निर्दिशति-समस्तक इति समस्त एव वैश्वानर उपास्यः। एकादशखण्डमारभ्याष्टादशखण्डपर्यन्तमष्टानामपि खण्डानामेकवाक्यत्वात्। तथा च व्यस्तोपासनफलनिर्देशः समस्तोपास-

नफलनिर्देशस्यैकदेशानुवादमात्रमवगन्तव्यम् । यथा पूर्वमीमांसायाः प्रथमाध्यायचतुर्थपादस्य द्वादशाधिकरणे—"वैश्वनरं द्वादशकपालं निर्वपेत्पुत्रेजते" इत्यत्र "यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति" इत्याद्यवान्तरनिर्वापफलकीर्तनैर्द्वादशकपालेष्टिरेव संस्तूयते तथात्रापि व्यस्तोपासनफलनिर्देशैः समस्तोपासनं संस्तूयते ॥

---

(चतुर्विंशं शब्दादिभेदाधिकरणम्)

"नाना शब्दादिभेदात् ९६"

सर्वासां ब्रह्मविद्यानामैक्यं रूपाऽप्रभेदतः

भेदो रीतिगुणाख्यानां फलादीनां च भेदतः ॥

संप्रति सकला ब्रह्मविद्या उद्दिश्य विचार्यते सद्भूमदहरादद्याख्यानां सकलशाखागतानां ब्रह्मविद्यानामैक्यं वा भेदो वेति । ऐक्यमित्येवात्र युक्तं यत उपासनेषूपास्यस्यैव प्राधान्यं भवति, उपास्यं च सर्वत्र परं ब्रह्मैवेति रूपाऽभेदतो विद्यानामप्यभेदो विज्ञेयः ।

अत्र वदति सिद्धान्ती—भेद इति सर्वासां ब्रह्मविद्यानां परस्परं भेद एव । यतो विद्यानां परस्परं रीतिरनुष्ठानप्रकारो भिन्न एव, तत्र तत्रोपास्यब्रह्मगुणा अपहतपाप्मत्वादयो भिन्ना एव, आख्या च दहरविद्या भूमविद्येत्यादिलक्षणा भिन्नैव, फलान्यपि भिन्नानि, चोदना च भिन्नेति विद्यानामपि परस्परं भेद एव ॥

---

(पञ्चविंशं विकल्पाधिकरणम्)

"विकल्पोऽविशिष्टफलत्वात् ९७ काम्यास्तु यथाकामं समुच्चियेरन्न वा पूर्वहेत्वभावात् ९८"

ब्रह्मप्रापकविद्यानामेकेनापि समुच्चयः ।

स्वर्गसाधनवत्कार्यो, मैवं तुल्यफलत्वतः ।

ब्रह्माप्राप्तिफलानां तु यथाकामं समुच्चयः ॥

एवमत्र संदिह्यते–किमेकेनापि पुरुषेणोपासकेन ब्रह्मप्राप्तिमिच्छता ब्रह्मप्राप्तिफलानां विद्यानां समुच्चयः कार्यः=समुच्चयेन सकलान्युपासनान्यनुष्ठेयानि किं वा विकल्पेन=तेषूपासनेषु कस्य चिदनुष्ठानं कार्यमिति । तत्र समुच्चयपक्षो युक्तो यथा स्वर्गसाधनानां ज्योतिष्टोमवाजपेयादीनां समुच्चयो भवति, एक एव स्वर्गकामोऽनेकान् यागान् करोति तथैकोऽपि ब्रह्मप्राप्तिकामोऽनेकानि ब्रह्मोपासनानि करोतु ।

अत्रोच्यते–मैवमिति । नास्ति समुच्चयः किं तु विकल्प एव युक्तः । सातिशयत्वरहितं ब्रह्म यदेवैकेनोपासनेन प्राप्यं तदेवापरेणोपासनेनापीति किमर्थमुपात्तोपासनादपरमुपासनमुपादीयेत ? किं तूपात्तस्यैवोपासनस्यादरेणाभ्यासः कार्यः । युक्तः स्वर्गसाधनानां तु समुच्चयः स्वर्गस्य सातिशयत्वात् । ब्रह्माऽप्राप्तिफलानां=ब्रह्मप्राप्तिव्यतिरिक्तफलानां तु विद्यानां यथाकामं युक्तः समुच्चयोपि तदाह–"काम्यास्तु यथाकामं समुच्चीयेरन्" इति सूत्रकारः ॥

---

(षड्विंशं यथाश्रयभावाधिकरणम् )

"अङ्गेषु यथाश्रयभावः ५९ शिष्टेश्च ६० समाहारात् ६१ गुणसाधारण्यश्रुतेश्च ६२ न वा तत्सहभावाश्रुतेः ६३ दर्शनाच्च ६४"

कर्माङ्गमाश्रिता विद्या उपादेया दृढं क्रतौ ।
उद्गीथादिरिवाङ्गत्वाद् विद्यानां यास्तदाश्रयाः ।
तत्साहित्याऽश्रुतेर्नास्त्यङ्गतैवाऽनियमस्ततः ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिकाः कर्माङ्गाश्रिता विद्याः श्रूयन्ते ताः क्रतुषु नियमेनोपादेया अनियमेन वेति विशये दृढं=नियमेनोपादेयाः, या उद्गीथाद्याश्रया विद्यास्तासां विद्यानामप्युद्गीथाङ्गत्वेनोगीथादिवत् तद्द्वारा क्रत्वङ्गत्वात् । अङ्गस्य चावश्यमुपसंहारो भवत्येवेत्यत्र—

उच्यते—तत्साहित्याश्रुतेरिति विद्यानामङ्गत्वमेव न श्रूयते येन नियमेनोपादेयत्वं स्यात् । प्रत्युत "यदेव विद्यया करोति श्रद्धयोप-

निपदा तदेव वीर्यवत्तरं भवति" इत्यनेन विद्यानां पृथक् फलश्रवणात् गोदोहनवदैच्छिक्युपादेयता तदुच्यतेऽनियम इति। किं च "एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति" इति श्रुत्या ब्रह्मण एवोपासकत्वप्रतीतेरन्येषामनुपासकत्वादनियम उपासनायां प्रतिपाद्यते। अन्यथा यजमानादीनामप्युपासकत्वे स्वस्य स्वयमेवाभिरक्षकत्वप्राप्त्या ब्रह्माभिरक्षतीति श्रुतिरपार्थास्यात्तस्मादनियम एव मुख्यः सङ्गतश्च पक्षः निरूपितश्चायमर्थः समदशाधिकरणे तद्दार्ढ्याय पुनरप्युक्तः॥

॥ इत्येकादशः पादः समाप्तः॥

---

## ॥ अथ द्वादशः पाद आरभ्यते॥

---

(प्रथमं पुरुषार्थाधिकरणम्)

"पुरुषार्थोऽतः शब्दादिति बादरायणः १ शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः २ आचारदर्शनात् ३ तच्छ्रुतेः ४ समन्वारम्भणात् ५ तद्वतो विधानात् ६ नियमात् ७ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ८ तुल्यं तु दर्शनम् ९ असार्वत्रिकी १० विभागः शतवत् ११ अध्ययनमात्रवतः १२ नाविशेषात् १३ स्तुतयेऽनुमतिर्वा १४ कामकारेण चैके १५ उपमर्दं च १६ ऊर्ध्वरेतस्सु च शब्दे हि १७ परामर्शं जैमिनिरचोदनाच्चापवदति हि १८ अनुष्ठेयं बादरायणः साम्यश्रुतेः १९ विधिर्वा धारणात् २०"

विद्याङ्गकर्मणा लभ्यः पुरुषार्थोऽथ विद्यया।
कर्मप्राधान्यतः पूर्वः श्रुत्यभिप्रायतः परः॥

विद्याभेदाभेदचिन्ताया अनन्तरं संप्रति पुरुषार्थावाप्तिचिन्तनसमयोऽयम्। पुरुषार्थः किं विद्याङ्गकेन कर्मणा लभ्यते किं वा

चिद्ययेति संदेहस्तत्र प्रथमपक्षी प्रतिवदति पूर्वः–कर्मणेति "अश्वपतिः केकयः किलात्मविच्चमस्ताद्विज्ञायोपगतांस्तानृषीन् प्रत्याह यक्ष्यमाणो ह वै भगवन्तोहमस्मि" "यदेव विद्या करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ॅ समाः" इत्यादि श्रुतिवाक्येभ्यः कर्मणः प्राधान्यावगमात् विद्याङ्गकात् कर्मण एव पुरुषार्थो लभ्यते।

अत्र सिद्धान्ती वदति पर इति विद्यया पुरुषार्थो लभ्यत इत्येष पक्षो युक्तस्तथैव च श्रुतिनामभिप्रायस्तथा श्रूयते–"ब्रह्मविदाप्नोति परम्" "तमेवं विद्वानमृत इह भवति" "नान्यः पन्था विद्यतेऽयनाय" इत्यादिः। कर्मत्यागोपि श्रूयते–"ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति। विद्यायाः कर्मानङ्गत्वान्न विद्यापेक्षया कर्मणां प्राधान्यम्। "कुर्वन्नेवेह" इत्यादौ हि विद्वान् कर्म कुर्वन्नपि विद्यामाहात्म्यान्न लिप्यते इति विद्यैव स्तूयते। एवमन्यत्रापि द्रष्टव्यम्॥

---

(द्वितीयं स्तुतिमात्राधिकरणम्)

"स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् २१ भावशब्दाच्च २२"

एषरसानां वाक्येन किमुद्गीथः प्रशस्यते।
अध्वराङ्गेऽथ वोद्गीथे रसदृष्टिर्विधीयते॥
इयमेव जुहूः स्वर्ग इतिवाक्यमिव स्तुतिः
रसादिरूपेणाप्राप्ते रसदृष्टिर्विधीयते॥

"एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः" इत्येन वाक्येन किमुद्गीथः स्तूयते किं वात्रोद्गीथे रसदृष्टिर्विधीयते। किं युक्तम्? स्तुतिरिति। यथा "इयमेव जुहूः स्वर्लोकः" इत्यनेन जुहूः स्तूयते तथात्रापि रसतमत्वेनोद्गीथःस्तूयते–

अत्रोच्यते–रसादीति। यदि रसतमत्वरूपेणोद्गीथः प्रमाणान्तरात्प्रतिपन्नः स्यात्तदा तमुद्दिश्य स्तुतिरपि संभवेन्न चैवमस्तीति रसदृष्टिर्विधीयते रसतमत्वरूपेणोद्गीथस्योपासना कार्येत्यर्थः।

"इयमेव जुहूः स्वर्लोकः" इत्यत्र तु उपासीतेत्यादृगुपासनविधिरपि नोपलभ्यते जुहः स्वर्लोकत्वं चासंभवीत्यगत्या स्तुतिपरत्वं वाक्यस्याश्रीयते। एवमन्येषामपि वाक्यानां दर्शाविधायकत्वं विज्ञेयम् ॥

---

(तृतीयं पारिप्लवाधिकरणम्)

"पारिप्लवार्था इति चेन्न विशेषितत्वात् २३ तथा चैकवाक्योपबन्धात् २४"

वेदान्ते सर्वमाख्यानं भूतार्थस्यैव बोधकम् ।
विधिवाक्यैकवाक्यत्वात् किं चिद् विद्याविधायकम् ॥

वेदान्तेषु "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति स होवाच प्रतर्दनस्त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्यादीन्याख्यानानि श्रूयन्ते तानिच सर्वाणि किं भूतार्थशंसकानि किं वा विद्याविधायकानीति विचिकित्सायाम्–भूतार्थबोधकानीति युक्तम्। आख्यानानां भूतार्थबोधकत्वस्वाभाव्यात्। तस्मान्न विद्याविधिपराणीति प्राप्तम्—

तत्रोच्यते–विधिवाक्येति। प्रतर्दनो ह वै इत्यादीनि कानि चिदाख्यानानि आत्मा वारेद्रष्टव्य इत्यादिविधिवाक्यैनैकवाक्याद्विद्याविधायकान्येव, परमात्मन आयुष्ट्वामृतत्वेनोपासनं विधीयतेत्र। "मनुर्वै वैवस्वतो राजा" इत्यादीनि त्वाख्यानानि भूतार्थशंसकान्येवेति विज्ञेयम् ॥

---

(चतुर्थमग्नीन्धनाधिकरणम्)

"अत एव चाग्नीन्धनाद्यनपेक्षा २५"

कर्माङ्गाश्रितविद्यायां नोधिकारस्तपस्विनः ।
अग्न्यभावाच्, कुतस्तस्याधिकारोस्त्येव संमतः ॥

याः कर्माङ्गमाश्रिता विद्या उक्तास्तासु तपस्विनां परिव्राजां नास्त्यधिकारोऽग्न्यभावात् । यस्य कर्मण्यधिकारस्तस्यैव तदङ्गाश्रितायां विद्यायामधिकारो युक्तो न तपस्विनां यागाद्यधिकारशून्याना मिति चेत्—

न, तस्य=तपस्विनोपि श्रुतेरधिकारः संमत एव तथा श्रूयते- "ब्रह्मसंस्थोऽमृतत्वमेति" "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति । तस्मात् कर्माङ्गाश्रितविद्यानुष्ठानेऽग्न्याधानादेरपेक्षा नास्ति किं तु स्वाश्रमविहितकर्मानुष्ठानमात्रस्य । यो वै देवानां प्रियः स्वाश्रमोचितकर्माणि नानुतिष्ठति मादृशो जन्तुस्तस्य तु नैवास्ति विद्यायामधिकारः ॥

---

(पञ्चमं सर्वापेक्षाधिकरणम्)

"सर्वापेक्षा च यज्ञादिश्रुते रश्ववत् २६"

गृहस्थाऽमृततां विद्या कर्महीनापि साधयेत्-।
मुनेरिव, न च श्रुत्या कर्मापेक्षत्वबोधनात् ॥

यदि यागादिहीनापि विद्या मुनेरमृतत्वं साधयति तदा तद्वद् गृहस्थस्याप्यमृतत्वं यागादिहीना विद्या साधयेदिति चेन्न गृहस्थस्य विद्याया अमृतत्वसाधने श्रुत्या कर्मापेक्षत्वबोधनात् । तथा हि-"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति वेदनं प्रत्येव यागादीनामङ्गत्वं बोध्यते न तु प्रत्ययार्थमिच्छां प्रति । युक्तिश्चात्र वेदान्तधर्मे श्रुत्यनुकूलैव प्रसरति न तु श्रुतिप्रतिकूला येन मुनेरिव गृहस्थस्याप्यमृतत्वं यागादिहीना विद्या साधयेत् ॥

---

(षष्ठ शमदमाद्यधिकरणम्)

"शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् २७"

शमदमाद्यनुष्ठानं न कार्यं गृहिणा कुतः ।
द्वेषाद्, विषयभेदेन कर्तव्यमविरोधतः ॥

यदि गृहस्थोचितं कर्मानुष्ठानं मुनिना न कार्यं तदा मुन्युचितं शमदमाद्यनुष्ठानं गृहिणापि न कर्तव्यं यतः करणव्यापाररूपं हि कर्म तद्विपरीताश्च शमादय इति कर्मणां शमादीनां परस्परं विरोधात् । कथं कर्मिभिर्गृहस्थैः शमादयोऽनुष्ठीयेरन्? इति चेन्न—विषयभेदेन विरोधाभावात् । विहितविषयकं हि कर्म कर्तव्यम् । अविहितविषयकाः प्रयोजनशून्यविषयकाश्च शमदमादयोऽनुष्ठेयाः । श्रुतिश्च शमाद्यनुष्ठानं प्रतिपादयति—"तस्मादेवं विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति तस्माद् गृहस्थेनापि शमदमाद्यनुष्ठानं कर्तव्यमेव ॥

---

( सप्तमं सर्वान्नानुमत्यधिकरणम् )

"सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् २८ अबाधाच्च २९ अपि स्मर्यते ३० शब्दश्चातोऽकामकारे ३१"

सर्वान्नं सर्वदा भुञ्ज्याद् विशेषाऽप्रतिपत्तितः ॥
प्राणसंशयवेलायां सर्वदा न श्रुतेः स्मृतेः ॥

वाजिनां छन्दोगानां च प्राणविद्यायाम्—"न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति न ह वा एवंविदि किं चनानन्नं भवति" इति प्राणोपासनवतः सर्वान्नभोजनानुमतिः संकीर्त्यते तस्मात् सर्वदा सर्वान्नं भुञ्ज्याद् विशेषस्याप्रतीतेरित्यत्रोच्यते—

प्राणसंशयवेलायामिति—प्राणसंशयवेलायामेव सर्वान्नभक्षणं श्रुतिः स्मृतिश्च बोधयति न सर्वदा तथा हि—"स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे" इत्यादिश्छान्दोग्यप्रथमप्रपाठकस्य दशमखण्डे श्रूयते । स्मृतिश्च—"प्राणसंशमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति प्राणसंशयवेलायामेव सर्वान्नभोजनमनुमन्यते ॥

( अष्टम विहितत्वाधिकरणम् )

"विहितत्वाच्चाश्रमकर्मापि ३२ सहकारित्वेन च ३३ सर्वथापि त एवोभयलिङ्गात् ३४ अनभिभवं च दर्शयति ३५"

न कार्याण्युत कार्याणि यागादीन्यऽमुमुक्षुणा ।
नित्यानित्यत्वसंयोगविरोधात् प्रथमं शिरः ।
नित्यवद्विहितत्वाच्च सहकारितया परम् ॥

विद्यायां यागादीनां कर्मणामङ्गत्वमस्तीति "तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिवचनैः प्रतिपादितम् । तत्राङ्गिन्यां विद्यायां गृहस्थस्य मुमुक्षोरभिलाषा भवतीति तेन यागादीन्यपि विद्याङ्गान्यनुष्ठेयानीति युक्तम् । अमुमुक्षुणा च गृहिणा यागादीनि नानुष्ठेयान्युतानुष्ठेयानीति संदेहे नानुष्ठेयानीत्येव युक्तं नित्यानित्य-संयोगविरोधप्रसक्तेः । यदा हि नानुष्ठेयानि तदा मुमुक्षुणा विद्यासं-पत्त्यर्थमनुष्ठेयानीत्यनित्यत्वं=कादाचित्कप्राप्तिमत्त्वं कर्मणां स्यादिति युक्तमेव । यदात्वमुमुक्षुणाप्यनुष्ठेयानि तदाश्रममात्रप्रयुक्तत्वान्नित्य-प्राप्तिमत्त्वं स्याद् विद्याप्रयुक्तत्वादनित्यप्राप्तिमत्त्वमपि स्यादिति नित्यानित्यसंयोगविरोधः प्रसक्तः स च न युक्तः संभवत्यां गताविन्-त्यमुमुक्षुणा यागादीनि नानुष्ठेयानीति पूर्वपक्षः ।

सिद्धान्तपक्षस्तु-अमुमुक्षुणापि गृहस्थेनानुष्ठेयानि यागादीनीति । श्रुतिर्हि नित्यत्वं बोधयति कर्मणाम्-"यावज्जीवमग्निहोत्रं जुहोति" इति । विद्योत्पत्तिद्वारेण विद्यासहकारितयाप्यनुष्ठेयान्येव यागा-दीन्यमुमुक्षुणापि । सिद्धे हि नित्यानित्यसंयोगविरोधः प्रसज्यते यथा नित्यं सद्ब्रह्मानित्यं न भवितुमर्हति, अनित्य सन्नित्यं न भवितु-मर्हतीति, नह्येवं व्यापाररूपेषु कर्मसु नित्यानित्यसंयोगविरोधः प्रभ-वति यथा-"अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" इत्यत्र विकल्पेन व्यवस्था तथात्रापि विद्याङ्गतयानुष्ठेयानामनित्यत्वम्, अकरणे प्रत्यवायविभीषिकयानुष्ठेयानां नित्यत्वं चेति । एकस्यापि कर्मणो व्यक्तिभेदेन नित्यत्वमनित्यत्वं च युक्तं यथाग्निहोत्रस्य ।

तदुक्तम्-"सिद्धं हि स्याच्छिरोधेयं न तु साध्ये कथं चन। विध्यधीनात्मलाभेऽस्मिन् यथाविधि मता स्थितिः" इति ॥

---

(नवम विधुराधिकरणम्)

" अन्तरा चापि तु तद्दृष्टेः ३६ अपि स्मर्यते ३७ विशेषानुग्रहश्च ३८ अतस्त्वितरज्ज्यायो लिङ्गाच्च ३८ "

विधुराणामुपासासु नोऽधिकारोस्त्यभावतः—।
आश्रमयोग्यधर्माणाम्, अस्ति दृष्टेः श्रुतेः स्मृतेः ॥

विधुरा मृतदारा अकृतदारा द्विजयोषितश्चेत्यादयस्तेषां ब्रह्मोपासनास्वधिकारो नास्ति वास्ति वेति विचिकित्सायां नास्तीति युक्तं यतो गृहस्थस्य ब्रह्मविद्याया आश्रम धर्माङ्गकत्वमुक्तमाश्रमधर्माश्च न विधुरैः कर्तुं शक्यन्ते दाराभावात् सदारस्यैव यागादिष्वधिकारात्।

अत्रोच्यते—अस्तीति, विधुराणामनाश्रमिणामपि मैत्रेयीगार्गीरैक्वभीष्मसंवर्तादीनां ब्रह्मविद्यानिष्ठत्वदर्शनात्=श्रवणात्-" स होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्याम्" "अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच" "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव" इति वाजसनेये ६ अध्याय ५ ब्राह्मणे। श्रुतिश्च—"तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्येत्" "दानेन तपसानाशकेन" इत्येवमाश्रमधर्मभिन्नैरपि विधुरैरनुष्ठातुं शक्यैस्तपोदानादिभिर्विद्यासम्पत्तिं प्रतिपादयति। स्मृतिश्च—"जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति जपदयादिनापि धर्मेण विधुरयोग्येन विद्यासिद्धिं वदति। मित्रे भवो मैत्रः सर्वभूतदयावान्, ब्राह्मणो ब्रह्मनिष्ठः। तस्मादस्ति विधुराणामप्यधिकारस्तैश्च विधुरैर्ब्रह्मविद्या दानादिनोपस्करणीया ॥

( दशमं तद्भूताधिकरणम् )

"तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ४० न चाधिकारिकमपि पतनानुमानात्तदयोगात् ४१ उपपूर्वमपीत्येके भावमनशनवत्तदुक्तम् ४२ वहिस्तूभयथापि स्मृतेराचाराच्च ४३"

नैष्ठिकाद्याश्रमभ्रष्टा विद्यार्हा विधुरादिवत् ।
नैष्ठिकाद्याश्रमाप्तानां धर्मसत्त्वं नियम्यते ।
प्रायश्चित्तं न तद्धानौ विद्यार्हा नैव ते ततः ॥

नैष्ठिको ब्रह्मचारिविशेषो यो गुरुकुल एवात्मानमवसादयेन्न गृहस्थाश्रमं प्राप्नुयात्। तदुक्तं याज्ञवल्क्येन-"नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ। तदभावेस्य तनये पत्न्यां वैश्वानरेपि वा" इति। तेषु नैष्ठिकवानप्रस्थपरिव्राजकाश्रमेषु ये प्राप्ताः पुनश्च तत्तदाश्रमधर्मलोपेन परिभ्रष्टास्ते ब्रह्मविद्यार्हाः सन्ति न वेति विचार्यते किं युक्तम्? तेपि विद्यार्हाः सन्त्येव विधुरादिवत्=यथा विधुराणां दानादिभिः पुरस्कृता ब्रह्मविद्या सम्पद्यते तथैषामपि ब्रह्मविद्या सम्पत्स्यते। किं च यथा गृहस्थानां धर्मलोपे सति प्रायश्चित्तेन शुद्धिर्भवति तथैषामपि शुद्धिः स्यात् श्रूयते च ब्रह्मचारिणो धर्मलोपे प्रायश्चित्तम्-"ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति। तस्मान्नैष्ठिकाद्याश्रमभ्रष्टानामप्यस्ति ब्रह्मविद्यायामधिकारः।

अत्रोच्यते-नैष्ठिकाद्याश्रमाप्तानामिति। नैष्ठिकाद्याश्रमं प्राप्तानां तद्धर्मसत्त्वं शास्त्रेण नियम्यते=अवश्यकर्तव्यत्वेन बोध्यते-"ब्रह्मचार्याऽऽचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयेत्" "अरण्यमियात्ततो न पुनरेयात्" "संन्यस्याग्निं न पुनरावर्तयेत्" इति। तद्धानौ=नैष्ठिकाद्याश्रमधर्महानौ सत्यां प्रायश्चित्तमपि नास्ति तथा स्मर्यते-"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा" इति। अवकीर्णिगर्दभालम्भस्तु नैष्ठिकव्यतिरिक्तब्रह्मचारिणः प्रायश्चित्तं भवति। तस्मान्नैष्ठिकाद्याश्रमभ्रष्टानां नास्त्येव ब्रह्मविद्यायामधिकारः॥

( एकादशं स्वाम्यधिकरणम् )

"स्वामिनः फलश्रुतेरित्यात्रेयः ४४ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ४५"

कर्माङ्गमाश्रितोपास्तिं यजमानः प्रसाधयेत् ।
फलोपासनयोरेकाश्रयत्वप्रतिपत्तितः ॥
ऋत्विजां साङ्गयागस्य सिद्ध्यर्थं क्रयणादमी ॥

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानः प्रसाधयेदुत ऋत्विजः प्रसाधयन्तु । इत्यत्र यजमान इत्येव युक्तं फलोपासनयोरेकाश्रयत्वदर्शनात् फलं चोपासनस्य यजमानेनैव समीह्यत इति यजमान एवोद्गीथाद्युपासनं करोतु ।

अत्रोच्यते-ऋत्विजामिति ऋत्विजां क्रयणं हि साङ्गयागस्य सिद्ध्यर्थं कृतमिति वीर्यवत्तरत्वलक्षणाप्रतिबन्धरूपफलसंपादकत्वादुद्गीथाद्युपासनस्यापि यागाङ्गत्वमेवेत्यमी ऋत्विज एवोद्गीथाद्युपासनं प्रसाधयन्तु ॥

---

( द्वादशं सहकार्यन्तरविध्यधिकरणम् )

"सह कार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ४६ कृत्स्नभावात्तु गृहिणोपसंहारः ४७ मौनवदितरेषामप्युपदेशात् ४८"

अथमुनिरितिश्रुत्या मौनमुक्तमनूद्यते-।
विधायकपदाभावात्, अप्राप्तत्वाद्विधीयते ॥

इदमाम्नायते बृहदारण्यके-"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं मौनं च निर्विद्याथ ब्राह्मणः" इति । ब्राह्मणो = विद्वान्, पाण्डित्यं = पण्डाऽध्ययनजा ब्रह्मबुद्धिस्तद्वान् पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणम्, निर्विद्य = संप्राप्य, बाल्येन तिष्ठासेद् मननशीलो भवेत्, मननं श्रवणं च संप्राप्य मुनिर्भवेत् मौनं निदिध्यासनं संपादयेत्, अमौनं मौनभिन्नं श्रवणादिकं विद्यासहकारिणं मौनपदवाच्यं निदिध्यासनं च

लब्ध्वा ब्राह्मणः=ब्रह्मनिष्ठो भवति विद्यायाः परां काष्ठां प्राप्नोतीत्यर्थः ।

अत्राथमुनिरित्यनेन मौनमनूद्यते किं वा विधीयते इति विशये विधायकपदस्याभावात्, मौनपाण्डित्ययोश्च ज्ञानार्थत्वेन पाण्डित्यं निर्विद्येत्यनेनैव मौनस्य प्राप्तत्वादनूद्यत इति युक्तम् ।

अत्रोच्यते—अप्राप्तत्वादिति यदि मौनं प्राप्तं स्यात्तदाऽनूदितमेव स्यान्न च प्राप्तमस्ति पाण्डित्यबाल्याभ्यां मौनस्य व्यतिरिक्तत्वात् । यथा हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" "श्रोतव्यो मन्तव्यः" "शान्तो दान्तः" इत्यादिना विद्यासहकारिणो यागादयः शमादयः श्रवणादयश्च विधीयन्ते तथात्र विद्यासहकारि मौनं विधीयते विधायकपदाभावेऽप्यप्राप्तस्य विधेयत्वं स्वीक्रियत एव ॥

---

(त्रयोदशमनाविष्काराधिकरणम्)

"अनाविष्कुर्वन्नन्वयात् ४८"

बाल्येनेत्यत्र बालस्य कामचारादि गृह्यताम् ।
अदम्भादिविशेषस्य ग्रहणे हेत्वभावतः ॥
अदम्भाद्येव विद्यायां तस्यैवान्वयसंभवात् ॥

उक्तश्रुतौ "बाल्येन तिष्ठासेत्" इत्यत्र बाल्यपदेन किं ग्राह्यम् ? किं बालस्य सर्वं कर्म कामचारादि किं वा दम्भराहित्याद्येवेत्यत्र दम्भराहित्यादिविशेषस्यैव ग्रहणे मानाभावात् सर्वं बालकर्म कामचारादिकमदम्भित्वादिकं च विदुषा ग्राह्यमुपादेयमिति युक्तम् ।

अत्रोच्यते—अदम्भाद्यैर्वेति दम्भराहित्यादिकमेव यद् विद्योपयोगि बालकर्म तदेव ग्राह्यं न तु कामचारादिकं, श्रुत्या हि विद्यासहकारि विधीयते न च कामचारादीनां विद्यासहकारित्वं संभवति येन तेषामुपादेयत्वं स्यात् । अदम्भित्वादेस्त्वस्ति विद्यासहकारित्वमिति तदेव विदुषा संग्राह्यम् ॥

---

(चतुर्दशमैहिकाधिकरणम्)

"ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ५०"

अभ्युदयफला विद्या साधकैः पुण्यकर्मभिः ।
सिद्ध्यत्येवाविलम्बेन विलम्बे हेत्वभावतः ।
नियमव्यभिचारेण विलम्बेनाप्यनन्तरम् ॥

द्विविधा विद्याऽभ्युदयफला मोक्षफला च तत्राभ्युदयफला विद्या स्वसाधकैः पुण्यकर्मभिरविलम्बेनैव सिद्ध्यति किं वा कदा चित् काप्यविलम्बेन कापि विलम्बेनेत्यनियमस्तत्र विलम्बे कारणाभावाद-विलम्बेनैव सिद्ध्यन्युत्पद्यत इति, न हि कारणादनन्तरं कार्यविलम्बो युक्त इति प्राप्तम् ।

तत्राह—नियमव्यभिचारेणेति, साधकैः पुण्यकर्मभिस्तेषामनन्तर-मविलम्बेनैव विद्योत्पद्यत इति नियमस्य व्यभिचारेण कदा चिद्वि-लम्बेन कदा चिदविलम्बेनोत्पद्यते । तत्र प्रबलकर्मान्तरकृतप्रतिबन्धे सति विलम्बेन, प्रतिबन्धाभावे चाविलम्बेनेति विज्ञेयम् । अभ्युदय-फला च विद्या यथोद्गीथाद्युपासनम् ॥

---

(पञ्चदशं मुक्तिफलाधिकरणम्.)

"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ५१"

विद्या मोक्षफला सिद्ध्येत् सद्यः साधनकर्मभिः ।
प्राबल्यात् सर्वकर्मभ्यस्तद्विद्याहेतुकर्मणाम् ॥
पूर्वकृतापचाराणां संभवाद् विदुषामपि ।
पूर्ववन्नियमाभावाद् विलम्बेनाप्यनन्तरम् ॥

मोक्षफला विद्या दहरादिलक्षणा स्वसाधनभूतकर्मभिः सद्य एव सिद्ध्यति किं वा कदा चित् सद्यः कदा चिद्विलम्बेनेति विशये मोक्षफलप्रदविद्याहेतुकर्मणां सर्वेभ्यः कर्मभ्यः प्राबल्यात् कर्मान्तर-कृतप्रतिबन्धासंभवेन सद्य एवेति पूर्वपक्षः ।

सिद्धान्तस्तु—विदुषामपि पूर्वकृतानामपचाराणां संभवात् पूर्व-वदनियम एव । यस्य हि विदुषः पूर्वकृतोऽपचारो न भवति तस्य मोक्षफला विद्याऽनंतरमेव—तत्साधनीभूतकर्मानुष्ठानादनन्तरमेव सद्य

एव सिद्ध्यति, यस्य तु पूर्वकृतोऽपचारोऽस्ति तस्य विलम्बेन । पूर्वकृतापचाराणां सत्त्वाऽसत्त्वे च विद्योत्पत्तौ विलम्बाऽविलम्बाभ्यामनुमेये ॥ श्रीमते रामानुजाचार्यमुनये नमः ॥

## इति द्वादशः पादः समाप्तः ।

इति पञ्चनदीयसुदर्शननिर्मितायां विशिष्टाद्वैताधिकरणमालायां तृतीयोऽध्यायः समाप्तः ।



## अथ चतुर्थाध्यायस्य प्रथमः पाद आरभ्यते ।

---

( प्रथममावृत्त्यधिकरणम् )

"आवृत्तिरसकृदुपदेशात् १ लिङ्गाच्च २"

ब्रह्मविद्या ह्यनुष्ठेया सकृद्वाथ पुनः पुनः ।
आद्यो वेदनमात्रोक्तेरदृष्टविषयत्वतः, ॥
ध्यानोपासनपर्यायैर्वेदनस्योपदेशतः ।
प्रति ब्रह्मापरोक्षत्वं दृष्टोपायत्वतः परः ॥

"ब्रह्म वेद ब्रह्मैव भवति" "आत्मा वारे द्रष्टव्यः" इत्यादिका ब्रह्मोपासना श्रूयते सा च ब्रह्मोपासना सकृदेवानुष्ठेया पुनः पुनर्वेति विचिकित्सायामुच्यत आद्य इति, उक्तप्रभृतिवचनेषु वेदनमात्रमुक्तं नत्वसकृदावृत्तं वेदनं येनासकृदनुष्ठानं स्यात्तस्मादसकृदावृत्तौ मानाभावात्, वेदनस्यादृष्टविषयत्वाच्च = दृष्टविषयं ह्यवघातादि "व्रीहीनवहन्ति" इति प्रतिपादितं तण्डुलनिष्पत्तिपर्यन्तमनुष्ठीयते पुनः पुनर्न चैवं ब्रह्मोपासनाया दृष्टविषयत्वम् = दृष्टोपायत्वमस्तीति सकृदेव ब्रह्मोपासना विधेयेति प्राप्ते–

उच्यते–ध्यानोपासनेति, "मनो ब्रह्मेत्युपासीत" "ब्रह्मवेद ब्रह्मैव भवति" "आत्मा वारे द्रष्टव्यः" इत्यादौ ध्यानोपासनादिपर्यायैर्वेदनमुपदिश्यते, यदि सकृदावृत्तौ शास्त्रस्याभिप्रायः स्यात्तदा ध्यानोपासनादिपर्यायैर्वेदनं नोपदिश्येत । किं च वेदनं हि ब्रह्मापरोक्षत्वं

नियमाभावतो ध्यायेत् परं ब्रह्म यथा तथा, ।
आसीनः सम्भवाद्, देशे काले चैकाग्रताकरे ॥

ध्येयतया यदुक्तं ब्रह्म तत् यथा तथा=आसीनः शयानस्तिष्ठन् गच्छन्नित्यनियमेन ध्यायेदिति चेन्न । आसीनस्यैव ध्यानसम्भवादासीन एव ध्यायेदित्याह-आसीन इति । कस्मिन् देशे काले च ध्यायेदित्यत्रोच्यते देश इत्यादिना चित्तैकाग्रताकरे देशे काले च ध्यायेत् । स्मरन्ति च–"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् १ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये" इति ॥

---

( षष्ठमाप्रायणाधिकरणम् )

"आप्रायणात्तत्रापि हि दृष्टम् १२"

उपास्यो हरिरेकाहे तावता शास्त्रपालनम् ।
आमृतेरनुवर्तेतोपासनं सर्वदा श्रुतेः ॥

यदिदं प्रस्तुतमुपासनं तत् किमेकस्मिन्नेव दिने संपाद्यं किं वा मरणपर्यन्तमिति संशय एकस्मिन्नपि दिन उपासनसम्पत्त्या शास्त्रस्य पालनं शास्त्रस्य चरितार्थता भवत्येवेत्याह हरिरेकाह एवोपास्यइति। अत्रोच्यते–आमृतेरिति मरणपर्यन्तमुपासनं सर्वदा कर्तव्यं तदाह श्रुतिः–"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति, एवं उपासनया सह यावदायुषं वर्तयन् ब्रह्मलोकं प्राप्नोतीत्यर्थः ॥

---

( सप्तमं तदधिगमाधिकरणम् )

"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् १३"

अतीतोत्तरपापानां नाशाऽश्लेषावुपासनात् ।
फलं नो वाथ वास्त्याद्योऽभुक्तकर्मक्षयाऽमतेः ।
अस्त्युपासनमाहात्म्याद्, गतिरेषा प्रमादजे ॥

"तद् यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादौ विदुषामतीतपापानां क्षयः श्रूयते । तथा-"तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यते" इत्यादौ विद्योत्तरभाविपापानामश्लेषः श्रूयते । तौ नाशाश्लेषावुपासनात् फलरूपौ न भवत उत भवत इति चिन्तायां "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिवचनाज्ज्ञायते विद्ययाऽतीतोत्तरपापानां नाशाश्लेषौ न भवत इति ।

तत्रोच्यते-अस्तीति, अतीतोत्तरपापानां नाशाश्लेषलक्षणं फलं उपासनाद् भवत्येवोपासनमाहात्म्यात् । उपासनमाहात्म्यं च श्रूयते- "एवं विदि पापं कर्म न श्लिष्यते" इत्यादि । तदिदं नाशाश्लेषलक्षणं फलं प्रमादजकर्मविषयकं विज्ञेयं, न तु बुद्धिपूर्वकं कृतानां पापानां नाशाश्लेषौ भवतः किं तु भोगस्तस्मात्सावधानैस्तत्रभवद्भिर्विद्वद्भिर्भवितव्यम् । कथं च तस्य सुभगभागधेयस्य विदुषः पापाचरणावकाशः स्याद् यस्य मुकुन्दपदारविन्दे विलग्नं मनः ॥

---

( अष्टममितराधिकरणम् )

"इतरस्याप्येवमसंश्लेषः पाते तु १४"

## पुण्यस्य विद्यया नाशोऽनुकूलत्वान्न सम्मतः ।
## विद्याविरोधसामान्यादस्ति किं तु मृते सति ॥

ननु "क्षीयन्ते चास्य कर्माणि" इत्यादौ विद्यया कर्ममात्रविनाशः श्रूयते, तत्र विद्यया पुण्यस्य नाशो न भवति भवतीति वा सन्देहे नेति युक्तं पुण्यस्यानुकूलत्वादिष्टत्वात्तस्य विद्यया नाशो न युक्त इति चेन्न-पुण्यस्यापि विद्यया विनाशो भवत्येव, यथा हि पापं निरयादिसंपादकत्वाद्विद्याविरुद्धं तथा पुण्यमपि स्वर्गादिसंपादकत्वाद्विद्याविरुद्धमेव । श्रूयते च-"तत्सुकृतदुष्कृते विधुनुतः" इति । किं तु शरीरयात्रानिमित्तं पुण्यमपेक्ष्यत इति मरणे सति शरीरवियोगादनन्तरं पुण्यं कर्म क्षीयते ॥

---

( नवममनारब्धकार्याधिकरणम् )

"अनारब्धकार्ये एव तु पूर्वे तदवधेः १५"

सर्वेषां कर्मणां नाशो विद्यातः पूर्वभाविनाम् ।
विशेषश्रवणाभावाद् देहस्य भ्रमिवत् स्थितिः ॥
अनारब्धफलानां यदवधिः श्रूयते मृतिः ।
कृष्णकृपातिरिक्तोयं संस्कारो नोपलभ्यते ॥

विद्योत्पत्तेः पूर्वजातानां कर्मणां विनाश उक्तस्तत्र किं तेषां सर्वेषां विद्यया विनाशो भवति किं वाऽनारब्धफलानामेवेति विचिकित्सायाम्—"क्षीयन्ते चास्य कर्माणि" इत्यादौ सामान्यतः कर्मक्षयश्रवणात् सर्वेषामेव क्षयो युक्तः। देहस्थितिस्तु कुलालचक्रभ्रमिवदपि संस्कारवशादुपपद्यते ।

अत्राह—अनारब्धफलानामिति। अनारब्धफलानामेव कर्मणां विद्यया विनाशो भवति यत्=यस्माद्धेतोर्मृतिरेव प्रारब्धफलानां कर्मणामवधिः श्रूयते—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति। अत्र विद्योत्पत्तौ सत्यामपि ब्रह्मसम्पत्तौ प्रारब्धविमोक्ष एव विलम्बः प्रतिपाद्यते। यदि विद्यया सर्वेषामेव कर्मणां विनाशः स्यात्तदा विद्योत्पत्तिसमनन्तरमेव विद्वान् ब्रह्म संपद्येत 'यावन्न विमोक्ष्ये' इति नोच्येत। तस्मादनारब्धफलानामेव विद्यया विनाशः श्रुतिसम्मतः। देहस्थितिसम्पादको यो वै परेण संस्कारविशेषः स्वीक्रियते तस्मिन् संस्कारे भगवदनुग्रहव्यतिरिक्ते मानं नास्ति। तस्मात्प्रारब्धकर्मजन्यभगवत्कृपयैव शरीरादिस्थितिर्भवतीति न प्रारब्धफलानां कर्मणां विद्यया विनाशः किं तु भोगेनेति विज्ञेयम् ॥

---

( दशममग्निहोत्राद्यधिकरणम् )

"अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनात् १६ अतोन्यापि ह्येकेषामुभयोः १७ यदेव विद्ययेति हि १८"

अग्निहोत्रादिकर्माणि नानुष्ठेयानि तत्फले ।
श्लेपशक्तेरभावेन विदुषस्तदनिच्छया ॥
अनुष्ठेयानि तेनैव विद्याकार्यविवृद्धये ।
विद्या न स्याद्विनश्येद्वा स्वाश्रमधर्मलोपतः ॥

इतरेषां विद्योत्तरभाविनां कर्मणामसंश्लेष उक्तोऽसंश्लेषश्च कर्मणां फलाजनकत्वमेव, तत्र—अग्निहोत्रादिकर्माण्याश्रमधर्मरूपाणि विद्योत्पत्तेरनन्तरं विदुषा नानुष्ठेयान्यनुष्ठेयानि वेति विशये नानुष्ठेयानीति युक्तं यतः फलसम्बन्धायैव कर्माण्यनुष्ठीयन्ते न च विद्योत्पत्तेरनन्तरं फलसम्बन्धः सम्भवति कर्माऽश्लेषप्रतिपादनादित्याह श्लेपशक्तेरभावेनेति । किंच विदुषस्तत्फलेच्छापि नास्तीति किमित्यनुष्ठेयानि कर्माणि ।

अत्र ब्रूमः—अनुष्ठेयानीति, तेनैव=श्लेषशक्तेरभावेनैव हेतुनानुष्ठेयानि । यदि विद्योत्पत्तेरनन्तरमप्यनुष्ठितकर्मश्लेषः स्यात्तदा विद्याविरोधित्वादाश्रमधर्मपरित्यागः स्यादपि युक्तो न चैवमस्ति । तस्माद् विद्याख्यकार्यस्य विवृद्धयेऽनुष्ठेयान्येवाश्रमकर्माणि । आश्रमधर्मलोपतो दूषितान्तःकरणस्य सा ब्रह्मविद्या नोत्पद्येतोत्पन्ना च विनश्येत तस्मादनुष्ठेयान्याश्रमकर्माणि ॥

———

(एकादशमितरक्षपणाधिकरणम्)

"भोगेनत्वितरे क्षपयित्वाथ सम्पद्यन्ते १९"

विद्यायोनिशरीरस्य तस्य देहान्तरस्य वा—।
अन्ते प्रारब्धकार्याणां कर्मणां क मतः क्षयः ॥
तस्य तावदितिश्रुत्या तच्छरीरावसानके ।
नैवं भोगेन तन्नाशोऽनियमादत्र सम्मतः ॥

अश्लेषविनाशविषयव्यतिरिक्तानां प्रारब्धफलानां कर्मणां क=कदा क्षयः संमतः? किं विद्यायोनिशरीरस्यान्ते किं वा तच्छरी-

रस्यान्तेऽथ वा शरीरान्तरान्त इत्यनियमसंशये तच्छरीरेत्युच्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इतिश्रुत्या तच्छरीरावसाने प्रारब्धफलकर्मणां विनाशावगमात्तथैव स्वीक्रियते।

सिद्धान्तमतमाह—नैवमिति—भोगेनैव प्रारब्धफलकर्मणां नाशादनियमेन नाशः सम्मतस्तथा हि—यदि प्रारब्धफलकर्मणां फलमेकशरीरोपभोगयोग्यं भवति तदा तच्छरीरावसान एव तेषां क्षयः। यद्यनेकशरीरोपभोगयोग्यं भवति तदा शरीरान्तरावसाने तेषां क्षयः। प्रारब्धफलकर्माण्येवोद्दिश्य स्मर्यते—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति॥

॥ इति त्रयोदशः पादः समाप्तः ॥

---

## ॥ अथ चतुर्दशः पादः आरभ्यते ॥

(प्रथमं वागधिकरणम्)

"वाङ्मनसि दर्शनाच्छब्दाच्च १ अत एव सर्वाण्यनु २"

लयो मनसि वाग्वृत्तेर्वाचो वा,ऽप्रकृतित्वतः।
हृदो वाचः शिरः पूर्वं, द्वितीयं दर्शनाच्छ्रुतेः॥
वाचा सहैव सर्वेषामिन्द्रियाणां लयो हृदि॥

संप्रति प्रयतात्मनां प्रयाणप्रकारश्चिन्त्यते—इदमाम्नायते—"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति। अत्र वाग्वृत्तिमात्रस्य मनसि लयः=संपत्तिः संमता किं वा स्वरूपतो वाच एवेति, निशये—स्वप्रकृतावेव लयो भवति हृदः=मनसश्च वाचोऽप्रकृतित्वात् पूर्वं शिरोयुक्तम्=वाग्वृत्तेर्मनसि लयो युक्तो वागादिवृत्तीनां मनोधीनत्वात्।

अत्राभिधीयते—द्वितीयमिति द्वितीयं शिरो युक्तम्। वागिन्द्रिय उपरतेपि मनःप्रवृत्तिर्दृश्यते न तु मनस्युपरते वाक्प्रवृत्तिरित्याह दर्शनादिति। अथ मनस्युपरते वाक्प्रवृत्त्यभावेन वाग्वृत्तेरेव मनसि

संपत्तिः सिद्धा न तु वाचस्तच्च स्वीकृतमेव पूर्वपादिनेत्याशङ्क्योच्यते श्रुतेरिति 'वाङ् मनसि संपद्यते' इति श्रुत्या हि स्वरूपत एव वाचो मनसि संपत्तिः प्रतिपाद्यते न तु वाग्वृत्तेः । वाचा सह च सर्वाण्येवेन्द्रियाणि मनसि लीयन्ते—"तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः" इति श्रुतेः ॥

---

( द्वितीयं मनोधिकरणम् )

"तन्मनः प्राण उत्तरात् ३"

प्राणा पाथोमया अद्भिः सृष्टमन्नं मनस्तथा—।
अन्नमयं, ततः प्राणे मनसो लय उच्यते ॥
अहङ्कारान्मनो जातं प्राणा वै सूक्ष्मभूतजाः—।
कार्यकारणभावान्नो लयस्तस्माच्छ्रुतेर्मतः ॥

उक्तश्रुतौ "मनः प्राणे" इत्यनेन प्रलीनसर्वेन्द्रियं मनः प्राणे संपद्यते स्वरूपेण, न मनोवृत्तिमात्रम् । तत्रापि "अन्नमयं हि सोम्य मनः" इत्यनेन मनसोऽन्नमयत्वम् । "ता अन्नमसृजन्त" इत्यनेनान्नस्याऽम्मयत्वं सिद्धं "आपोमयः प्राणः" इत्यनेन च प्राणस्याम्मयत्वं सिद्धं एवं च परंपरया मनःप्राणयोः कार्यकारणभावोस्तीति तन्मूल एव मनसः प्राणे लयः श्राव्यते न तु कार्यकारणभावविहीनः श्रुतिमात्रसिद्धो मनसः प्राणे लयः ।

अत्रोच्यते—अहङ्कारादिति मनोऽहङ्काराज्जातं प्राणाश्च सूक्ष्मभूतेभ्यो जाता इति तयोः कार्यकारणभाव एव नास्ति येन तन्मूलो लयः स्यात्प्राणे । किं तु "मनः प्राणे" इति श्रुतेरेव मनसः प्राणे लयः प्रतिपाद्यते । तदाह सूत्रकारोपि 'उत्तरात्' इति । उत्तरात् 'मनः प्राणे' इति वाक्यान्मनसः प्राणे लयोवगम्यते, न तु कार्यकारणभावत्वानुकूलयुक्त्या ॥

---

( तृतीयमध्यक्षाधिकरणम् )

"सोध्यक्षे तदुपगमादिभ्यः ४"

प्राणस्तेजसि वा जीवे लीयते ? तेजसि श्रुतेः ।
पूर्वापरश्रुतीनां तु पक्षो मीमांसया परः ॥

प्रलीनमनसः प्राणस्य किं तेजसि लयो भवति किं वा जीव इति विशये "प्राणस्तेजसि" इति श्रुतेस्तेजस्येव प्राणो लीयत इति चेन्न पूर्वापरश्रुतीनां मीमांसया जीवे प्राणो लीयते तथा हि—"एवमेवेम-मात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति" "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादिश्रुतिषु जीव एव प्राणलयः प्रतिपाद्यते तस्माज् जीवसंयुक्तस्य प्राणस्य "प्राणस्ते-जसि" इति श्रुत्या तेजसि लयः श्राव्यते न तु केवलस्य प्राणस्य ॥

---

(चतुर्थं भूताधिकरणम्)

"भूतेषु तच्छ्रुतेः ५ नैकस्मिन् दर्शयतो हि ६"

प्राणस्य जीवयुक्तस्य शुद्धे तेजसि किं लयः ।
संसृष्टसर्वभूते वा तेजोमात्रश्रुतेस्तथा ।
सर्वभूतमयत्वोक्तेर्जीवस्य परसंमतिः ॥

जीवसंयुक्तस्य प्राणस्य "प्राणस्तेजसि" इति श्रुत्या तेजसि लय उक्तस्तत्रायं सन्देहः किं शुद्धे तेजसि=तेजोमात्रे जीवसंयुक्तप्राणस्य लयः संमतः किं वा सर्वैर्भूतैः संसृष्टे तेजसीति किं युक्तम् ? "प्राण-स्तेजसि" इत्यत्र तेजोमात्रे लयश्रुतेस्तथा=तेजोमात्र एव लयः संमत इति ।

अत्रोच्यते–सर्वेति "पृथिवीमय आपोमयो वायुमय आकाशमय-स्तेजोमयः" इतिश्रुत्या वाजसनेये ६ अध्याय ४ ब्राह्मणे जीवस्य सर्वभूत-मयत्वोक्तेस्तद्युक्तस्य प्राणस्य संसृष्टसर्वभूत एव तेजसि लयो युक्त-इत्याह—परसंमतिरिति परस्य पक्षस्य संमतिः ॥

---

(पञ्चममासृत्युपक्रमाधिकरणम्)

"समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ७ तदापीतेः संसारव्यपदे-

शात् ८ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ९ नोपमर्देनातः १०
अस्यैव चोपपत्तेरूष्मा ११ प्रतिषेधादिति चेन्न
शारीरात्स्पष्टोह्येकेषाम् १२ स्मर्यते च १३"

**उक्ता प्रायणरीतिस्त्वविदुषो विदुषश्च यत् ।**
**अत्रैवामृतताप्राप्तिर्द्वयोरासृत्युपक्रमात् ॥**

उक्तैषोत्क्रमणरीतिः किमविदुष एवोत विद्वदविदुषोर्द्वयोरेवेति विशये–अविदुष एव यद् यतो विदुषस्तु "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते" इति श्रुत्यात्रैवामृतत्वप्राप्तिः प्रतीयते ।

अत्रोच्यते–द्वयोरिति विद्वदविदुषोर्द्वयोरेवैषोत्क्रमणरीतिः समना,आसृत्युपक्रमात् = गमनोपक्रमात्–"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इत्यत्रोर्ध्वमायन्निति सर्वेषामेकरूपेणैवोक्तोत्क्रमणरीतिः श्रूयते । तदनन्तरं तु विशेषोपि श्रूयते—"तेन प्रद्योतनेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इत्यत्र विदुषो मूर्ध्नो निष्क्रमणं प्रतिपाद्यते ॥

---

( षष्ठं परसम्पत्त्यधिकरणम् )

"तानि परे तथा ह्याह १४"

**जीवयुक्तानि भूतानि यान्ति कृतय आत्मनः ।**
**यथाकामं यथाविद्यं, किं वाथ परमात्मनि ॥**
**आद्यः परात्मसंपत्तावऽभोगात् सुखदुःखयोः ।**
**परः—तेजः परस्यां देवतायामित्यतः श्रुतेः ॥**

जीवयुक्तस्य प्राणस्य संसृष्टसर्वभूते तेजसि संपत्तिरुक्ता तत्र–जीवयुक्तानि तानि सूक्ष्मभूतानि किं यथाकामं यथाविद्यमात्मनः =स्वस्य कृतये=कार्याय यान्ति किं वा परमात्मनि यान्ति=संप-

द्यन्त इति संशये परमात्मसम्पत्तौ सुखदुःखोपभोगो न सम्भवतीति यथाकामं यथाविद्यं स्वकार्याय सुखदुःखोपभोगाय प्रयान्तीति प्राप्तम् ।

मैवम्— "तेजः परस्यां देवतायाम्" इति श्रुतेः परमात्मनि संपत्तिरेव विज्ञायते तस्मात् प्रथमं परमात्मसंपत्तौ जातायां तदनन्तरं यथाविद्यं यथाकामं स्वकार्याय प्रयान्तीति युक्तम् ॥

---

(सप्तमविभागाधिकरणम्)

"अविभागो वचनात् १५"

कारणापत्तिरूपा किं संपत्तिः परमात्मनि ।
अविभागोथ वा, पूर्वः—यतोयं सर्वकारणम् ।
अविभागोऽनुषङ्गेण संपद्यत इति श्रुतेः ॥

येयं परमात्मनि संपत्तिरुक्ता जीवयुक्तानामणुभूतानां सा किं प्राकृतलयवत् कारणापत्तिरूपा किं वाऽविभागोऽपृथग्भावतारूपेति विशये पूर्वः पक्षो युक्तो यतोयं परमात्मा सर्वेषां कारणं तस्मिन् कारणस्वरूपे परमात्मनि या संपत्तिः सा कारणापत्तिरूपैवयुक्ता ।
अत्र ब्रूमः—अविभाग इति । परमात्मसंपत्तिः परमात्मतोऽविभागरूपैव यतः "वाङ्मनसि संपद्यते" इत्यत्रस्थं संपद्यत इतिपदमुत्तरवाक्येषु सर्वत्रानुषज्यते तेन च संपद्यत इतिपदेन संसर्गविशेष एव प्रतिपाद्यते न तु कारणतापत्तिस्तस्माद्विभागपक्षः सिद्धः ॥

---

(अष्टमं तदोकोऽग्रज्वलनाधिकरणम्)

"तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया १६"

कवेर्मूर्द्धन्यया नाड्या गमने नियमो नहि ।
भूयस्त्वादतिसूक्ष्मत्वान्नाडीनां दुर्विवेकतः ।
नियमोऽनुग्रहाद्दैवान्नाडीविज्ञानसंभवात् ॥

उत्क्रान्तावऽविद्वदपेक्षया विदुषो विशेषप्रतिपादनमेवास्याधिकरणस्य फलम् । कव्वेर्विदुषो गमनं प्रयाणकाले किं यया कया चिन्नाड्येत्यऽनियमः किं वा मूर्द्धन्यया नाड्येति नियम इत्यत्र नाडीनां भूयस्त्वादतिसूक्ष्मत्वाद् दुर्विवेचनत्वाच्चानियमपक्षो युक्त इति चेत्-

न—नियमपक्ष एव युक्तस्तथैव श्रूयते-"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका तयोर्ध्वमायन्नऽमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति मूर्द्धन्ययैव नाड्या विदुष उत्क्रमणं प्रतिपाद्यते । नाड्यविज्ञानानुपपत्तिरपि न युक्तिमती यतो दैवात्=परमात्मसम्बन्धिनोऽनुग्रहान्नाडीनां विज्ञानमपि सम्भवत्येव । यस्य भगवतोऽनुग्रहेण तस्यातिसूक्ष्मतमं दुर्विज्ञेयमपि स्वरूपं पश्यति विद्वान् का कथा तस्यानुग्रहेण नाडीनां दर्शनस्य ? ॥

---

( नवमं रश्म्यनुसाराधिकरणम् )

"रश्म्यनुसारी १७"

आदित्यमण्डलं विद्वान् प्रयात्यानियमादिव ।
रश्मीनां निश्यऽभावेन, नियमादेव रश्मिभिः ॥
एवकारश्रुते रात्रौ तापाद्रश्म्यऽनुमानतः ॥

मूर्द्धन्यनाड्या निर्गतस्य विदुष आदित्यमण्डलगमनं श्रूयते-"अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रामति" इति । तत्र विद्वान् रश्मिभिरेवादित्यमण्डलं प्रयातीति नियमः किं वाऽनियम इति विशये रात्रौ रश्मीनामभावान्नियमपक्षो न युज्यते रश्मिभिर्गमनं हि दिने सम्भवत्येवेति पाक्षिकगमनानुवादोऽयम्-"रश्मिभिरूर्ध्वमाक्रामति" इति ।

अत्रोच्यते-नियमादेवेति रात्रावपि तापेन रविरश्मीनामनुमानतः सिद्धिरस्त्येव किं चानियमपक्षे "अथैतैरेव रश्मिभिः" इत्येवकारश्रुतिरपार्था स्यात् तस्माद्दिनं वा स्यान्नक्तं वा स्याद् विद्वान्निर्गतः शरीराद्रश्मिभिरेव रविमण्डलं प्रयातीति नियम एव ॥

---

( दशमं निशाधिकरणम् )

"निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च १८"

निशिमृतो हरिं नैति निन्दितं मरणं निशि, ।
अविद्वद्विषया निन्दा कर्मबन्धनमोक्षतः ।
निशि मृतोपि तद्ब्रह्म याति विद्वाँस्तथाश्रुतेः ॥

निशि मृतः विद्वान् ब्रह्म न प्राप्नोति किं वा प्राप्नोतीति चिन्तायां निशि रश्मिद्वारादित्यमण्डलप्राप्तिसम्भवेपि "दिवा च शुक्लपक्षश्च उत्तरायणमेव च मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इत्यादिवचनैर्निशामरणस्य निन्दितत्वात् निशि मृतो न हरिं प्राप्नोति। अन्यथा किं प्रयुक्तं निशामरणं निन्दितं स्यात् ?।

अत्रोच्यते—अविद्वद्विषयेति। निशामरणनिन्दा ह्यविद्वद्विषयास्ति किं च निशि मरणस्य निन्दितत्वमधोगतिप्रदत्वेन वक्तव्यं न च विदुषोऽधोगतिः संभवति विद्यया पूर्वकर्मणां विनाशादुत्तरकर्मणामश्लेषात्प्रारब्धकर्मणां चोपभोगेन क्षीणत्वात् तस्मान्निशि मरणमविदुषां निन्दितं न विदुष इति निशि मृतोपि विद्वाँस्तद्ब्रह्म श्रीवैकुण्ठाधिपतिं यात्येव तथैव श्रूयते—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति। तस्य विदुषः। यावन्न विमोक्ष्ये=यावत्प्रारब्धकर्मक्षयो न भवतीत्यर्थः ॥

---

( एकादशं दक्षिणायनाधिकरणम् )

"अतश्चायनेपि दक्षिणे १९ योगिनः प्रति स्मर्यते स्मार्ते चैते २०"

दक्षिणेप्ययने विद्वान् ब्रह्म नैत्येति वा मृतः ।
नैति-तत्र मृतेर्निन्दा चन्द्रं गत्वा निवर्तते ।
अविद्वद्विषया निन्दा विद्वान् ब्रह्मैति चन्द्रतः ॥

दक्षिणायने मृतो विद्वान् परं धाम न प्राप्नोति किं वा प्राप्नोतीति चिन्तायाम्-नेत्याहुच्यते न प्राप्नोति यतस्तत्र=दक्षिणायने मृतेर्मरणस्य

निन्दास्ति--"दिवा च शुक्लपक्षश्च उत्तरायणमेव च मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति । तस्माद्दक्षिणायने मृतो विद्वान् चन्द्रमण्डलं गत्वा पुनर्भवसागरे निवर्तते--"अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति चन्द्रप्राप्तिः श्रूयते। चन्द्रं प्राप्तानां च "यदा तत् पर्यवैत्यथैव मेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिः श्रूयते ।

अत्रोच्यते—अविद्वद्विषयेति । दक्षिणायने मरणस्य निन्दा त्वविद्वद्विषयास्ति । चन्द्रं गत्वा पुनरावृत्तिरप्यविद्वद्विषयैवऽऽज्ञया "तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषात् विद्वांस्तु चन्द्रमपि गत्वा ब्रह्म प्राप्नोत्येवेति सिद्धान्तः । प्रारब्धफलकर्मणां भोगेन क्षीणत्वात् प्रतिबन्धकोपि नास्तीति पूर्वोक्तमनुसंधेयम् ॥

इति चतुर्दश पादः समाप्तः ॥

---

## अथ पञ्चदशः पाद आरभ्यते ।

---

(प्रथममर्चिराद्यधिकरणम्)

"अर्चिरादिना तत्प्रथितेः १"

अनेके ब्रह्मणो मार्गा अथ वैकोऽर्चिरादिकः ।
आद्यः श्रुतिषु मार्गस्याऽनेकै रूपैः प्रबोधनात् ॥
परः श्रुतिषु सर्वत्र मार्गैक्यप्रत्यभिज्ञया ।
विद्वांसो यान्ति ते नैव परंब्रह्मार्चिरादिना ॥

विदुषो ब्रह्मप्राप्तिरुक्ता तस्याश्च ब्रह्मप्राप्तेरनेके मार्गाः सन्ति किं वा एक एवार्चिरादिको य एव पक्षः सिद्धः स्यात्तदनुसारेणैव ब्रह्मप्राप्तौ मार्गस्य नियमानियमौ विज्ञेयाविति चिन्तायाम् ।

"अथ यदु चास्मिञ्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसंभव न्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासाँस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथः" इत्येवं छन्दोग्यचतुर्थप्रपाठकस्य पञ्चदशखण्डे ब्रह्ममार्गः श्रूयते । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं" इत्येवं कौषीतक्युपनिषत्प्रथमाध्यायस्य तृतीयानुवाके ब्रह्ममार्गः श्रूयते । इत्येवं ब्रह्मप्राप्तिमार्गस्य श्रुतिष्वनेकैः रूपैः प्रबोधनादनेके ब्रह्मणो मार्गा इति युक्तं तथा च कोपि विद्वान् केन चिन्मार्गेण ब्रह्म प्रयातीति मार्गानियमः प्राप्तः ।

अत्रोच्यते—पर इति श्रुतिषु सर्वत्र तस्यैव मार्गस्य प्रत्यभिज्ञानादेक एवार्चिरादिको ब्रह्मप्राप्तिमार्गस्तेनैवार्चिरादिना मार्गेण परंब्रह्म प्रयान्ति विद्वांसः । एकस्यापि तस्य मार्गस्य क्वचित् क्वापि विशेषः श्रूयते क्वचित्कोपीति नैतावता मार्गभेदः संपद्यते ॥

---

( द्वितीयं वाय्वधिकरणम् )

"वायुमब्दादविशेषविशेषाभ्याम् २"

छन्दोगा वत्सरं प्राहुर्मध्य आदित्यमासयोः ।
वाजसनेयिनो देवलोकं तस्माद्विकल्प्यताम् ॥
युक्तोस्त्यत्रोपसंहारो मार्गैक्यप्रत्यभिज्ञया ।
मासात्संवत्सरं प्रैति देवलोकं ततः सुधीः ॥
देवलोकमरुल्लोकौ भिन्नौ लोकप्रसिद्धितः ।
ततः संवत्सरात् क्वाप्येकत्रैतु स्वेच्छया कविः ॥
अविशेषविशेषाभ्यां निर्देशादेक एव सः ।
ततः संवत्सरादूर्ध्वं वायुमेवैति कोविदः ॥

छान्दोग्यचतुर्थप्रपाटकस्य पञ्चदशखण्डे-"मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इत्येवं क्रमेण परंधाम गच्छतो विदुषः मासादित्ययोर्मध्ये संवत्सरप्राप्तिः श्रूयते। वाजसनेयाष्टमाध्यास्य द्वितीयब्राह्मणे तु "मासेभ्यो देवलोकं देवलोकादादित्यम्" इत्येवं मासादित्ययोर्मध्ये देवलोकप्राप्तिः श्रूयते। देवलोकसंवत्सरौ च भिन्नावेवेति तयोर्विकल्पोयुक्तस्तस्मात् कोपि विद्वान् मासेभ्यः संवत्सरं संवत्सरादादित्यमण्डलं प्रयाति,कोपि च विद्वान् मसेभ्यो देवलोकं देवलोकादादित्यमण्डलं प्रयातीत्याह विकल्प्यतामिति।

सिद्धान्तमाह-युक्त इति। सकलश्रुतिषु ब्रह्मप्राप्तिमार्गस्यैकत्वेन प्रत्यभिज्ञयात्रोपसंहारो युक्तः=ये विशेषा एकत्र नोक्ता अपरत्र चोक्तास्ते विशेषा अनुक्तिस्थलेप्युपसंहरणीयास्तस्माच्छान्दोग्योक्तमार्गे संवत्सरादनन्तरं देवलोकस्य निवेशः कार्यः, वाजसनेयोक्तमार्गे च मासेभ्योनन्तरं संवत्सरस्य निवेशः कार्य इति 'मासेभ्यो संवत्सरं संवत्सराद्देवलोकं देवलोकादादित्यमण्डलं सुधीर्विद्वान् प्रयाति ब्रह्ममार्गे इत्यवधेयम् ॥

संप्रति प्रधानोधिकरणविषय आरभ्यते-देवलोकमरुल्लोकावित्यादिना। अयं भावः-उक्तवाजसनेयवाक्ये-"मासेभ्यो देवलोकं देवलोकादादित्यम्" इत्यत्रादित्यात्पूर्वं देवलोकप्राप्तिरुच्यते, पुनश्चान्यत्र वाजसनेयिनः- "यदा वै पुरुषोस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीर्षते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्येवमादित्यात् पूर्वं वायुप्राप्तिं श्रावयन्ति। कौषीतकिनश्च-"अग्निलोकमागच्छति स वायुलोकं" इत्यादिनाप्यादित्यात्पूर्वं वायुप्राप्तिं श्रावयन्ति तत्रोक्तश्रुतिभिरादित्यात्पूर्वं देवलोकस्य वायुलोकस्य च प्राप्तिः प्राप्ता तौ च देवलोकवायुलोकौ लोकप्रसिद्धितो भिन्नावेवेति कोपि विद्वान् संवत्सराद्देवलोकं देवलोकादादित्यं प्रयातु कोपि च संवत्सराद्वायुलोकं वायुलोकादादित्यं प्रयात्वित्यनियमः प्राप्तः।

सिद्धान्तं वक्मि-अविशेषेति-वायुरपि देव एव तस्मात्तस्यैव वायोर्विशेषतया निर्देशे वायुरित्युच्यते सामान्यतया निर्देशे देव इत्युच्यते एवमत्रापि देवलोकमित्यविशेषतया निर्देशो वायुलोकमिति

विशेषणतया निर्देश इति य एव वायुलोकः स एव देव लोक इत्या- हैक एवेति ततश्चसंवत्सरादनन्तरं सामान्यनिर्देशेन देवलोकपद वाच्यं वायुलोकमेव प्रयाति विद्वानिति नियमो विज्ञेयः ॥

---

(तृतीयं वरुणाधिकरणम्)

" तडितोऽधिवरुणः संबन्धात् ३"

वरुणस्य निवेशः किं वायोरग्रेथ विद्युतः ।
कार्ये क्व चिन्निवेशो स्यादाद्यः पाठक्रमेण सः ॥
परो ह्यर्थक्रमेणात्र बाधात्पाठक्रमस्य तु ।
संबद्धा वरुणे विद्युत् तत इन्द्रः प्रजापतिः ॥
अर्चिरहः सितः पक्ष उत्तरायणवत्सरौ ।
मरुद्रवीन्दवो विद्युद्वरुणेन्द्रचतुर्मुखाः ।
एते द्वादश धीराणां परधामातिवाहिकाः ॥

"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम" इत्येवं वरुणलोकप्राप्तिं श्रावयन्ति कौषीतकिनस्तत्रायं सन्देहः किं पाठक्रमेण वायोरग्रे वरुणस्य निवेशः कार्यः किं वार्थक्र- मेण विद्युतोऽग्र इति । वरुणस्य क्वचिदपि निवेशः कर्तव्य एवेति पाठक्रमेणैव वायोरग्रे सः=निवेशः स्यादित्याद्यः पक्षो युक्तः ।

तत्रोच्यते पर इति—पाठक्रमस्यार्थक्रमेणात्र बाधोभवतीति वि- द्युतोऽग्र एव वरुणस्य निवेशः कार्यः । अर्थक्रमप्राबल्ये हेतुमाह स- म्बद्धा वरुणे विद्युदिति वरुणेन विद्युतः सम्बन्धो लोकवेदयोः प्र- सिद्ध एवास्तीति वरुणस्य क्वचिन्निवेशे कर्तव्ये विद्युतोग्र एव निवेशो युक्तः । तस्माच्च वरुणलोकादिन्द्रलोकमिन्द्रलोकात् प्रजापतिलोकं प्रयाति विद्वानित्याह तत इति ।

उक्तमार्गक्रमं संगृह्णामि–अर्चिरह इत्यादिना । तथोक्तं श्रीमच्छर-दमिश्रैरपि–"अर्चिरहस्सितपक्षानुदगयनाऽब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः" इति द्वादश ब्रह्मप्रापकाः ॥

---

(चतुर्थमातिवाहिकाधिकरणम्)

"आतिवाहिकास्तल्लिङ्गात् ४ वैद्युतेनैव ततस्तच्छ्रुतेः ५"

चिन्हभूता हरेर्धाम्नो मार्गस्याथार्चिरादयः ।
भोगस्थानानि वा यातां तेषां किं वातिवाहिकाः ॥
आद्यस्तथोपदेशस्य मार्गचिन्हेषु दर्शनात् ।
द्वितीयो लोकतोक्तेः स्याल्लोका भोगस्य भूमयः ॥
परः परमसिद्धान्त आतिवाहिकलिङ्गतः ।
वैकुण्ठप्रापिका विद्युद् वरुणादेस्त्वनुग्रहः ॥

एतेऽर्चिरादयः परधाममार्गस्य चिन्हभूता किं वा भोगभूमयः किं वा ब्रह्मप्रेप्सतामातिवाहिका इति विचिकित्सायामाद्यः पक्षो युक्तो यथाहि लोकेऽमुकं वृक्षममुकं ग्रामं गत्वा गन्तव्ये ग्रामे त्वया गन्तव्यमिति मार्गचिन्हानामुपदेशो दृश्यते तथैवात्रापि "अर्चिषोऽहरन्हः" "स वायुलोकं स वरुणलोकम्" इत्यादि मार्गचिन्हानामेवार्चिरादीनामुपदेशः प्रतीयते ।

परस्त्वाह द्वितीय इति कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिन्हत्वं नोपपद्यते तस्मादेते भोगभूमय एव । "देवलोकं वायुलोकम्" इत्यादिश्रूयते लोकत्वं च भोगभूमीनामेव प्रसिद्धं यथा—स्वर्लोको भूलोक इति ।

सिद्धान्तस्तु पर इत्यादिः, अर्चिरादयो हि ब्रह्म प्रयातामातिवाहिकाः=अतिवोढारः=गमयितारः । आतिवाहिकलिङ्गात्=गन्तृणां गमयितृत्वमेवातिवाहिकानां लिङ्गं गमयितृत्वं चैषां श्रूयते–"तत्पुरुषोऽमानवः स एतान् ब्रह्मगमयति" इति । गमयतीतिपदवाच्यस्य

गमयितृत्वस्य विद्युतः पूर्वैरप्यर्चिरादिभिः संबन्धोऽस्तीति तया मप्यातिवाहिकत्वं सिद्धं । चन्द्राद्विद्युतं प्राप्तं विद्वांसं यद्यपि विद्युत्पुरुष एव ब्रह्म प्रापयति "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति" इति श्रुतेर्वरुणादीनां च तत्रानुग्राहकत्वमात्रमेव तथाप्यनुग्राहकत्वादेव वरुणादीनामातिवाहिकत्वमित्याह वैकुण्ठप्रापिकेत्यादिना ॥

---

( पञ्चम कार्याधिकरणम् )

"कार्यं बादरिरस्य गत्युपपत्तेः ६ विशेषितत्वाच्च ७ सामीप्यात्तु तद्व्यपदेशः ८ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ९ स्मृतेश्च १० परं जैमिनिर्मुख्यत्वात् ११ दर्शनाच्च १२ न च कार्ये प्रत्यभिसन्धिः १३ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च १४ विशेषं च दर्शयति १५"

विधेरेवाथ कृष्णस्य परमात्मात्मनोरथ ।
उपासकमतो नेता गणस्तत्रार्चिरादिकः ॥
आद्यः सर्वगतस्यास्य गम्यत्वानुपपत्तितः ।
परो ब्रह्मपदस्यात्र मौख्याद् गत्युपपत्तितः ॥
तृतीयो बादरेर्दोषादुक्तपक्षद्वयेपि तु ।
तत्क्रतुन्यायतस्तत्र नियमः श्रुतिसम्मतः ॥

अयमर्चिरादिको गणः किं विधेः = हिरण्यगर्भस्यैवोपासकमतो लोकात् नेता नयतीत्यर्थः किं वा कृष्णस्य = परमात्मन एवोपासकं नयति

किं वा परमात्मन उपासकं प्रत्यगात्मनश्च प्रकृतिवियुक्ततया ब्रह्मात्मकतयोपासकं चोभावेव नयतीति नियमस्तत्राद्य एव पक्षोयुक्तः सर्वगतस्यास्य परमात्मनः गन्तव्यत्वानुपपत्तेर्हिरण्यगर्भप्राप्तये च तल्लोके गतिरुपपद्यते तदुपासकस्येति हिरण्यगर्भस्यैवोपासकं नयत्यर्चिरादिगणः ।

परस्त्वाह पर इति द्वितीयः पक्षो युक्तो ब्रह्मशब्दस्यास्मिन्नेव=परमात्मनि मौख्यात्=मुख्यत्वात्=मुख्यवृत्तत्वात्, श्रुतिश्च–"स एनान् ब्रह्म गमयति" इति ब्रह्मप्रापणमेवाभिधत्ते । यदुक्तं परमात्मोपासकस्य तत्प्राप्तये गतिर्नोपपद्यते तत्रोच्यते गत्युपपत्तिरिति परमात्मनः सर्वगतत्वेपि विदुषो विशिष्टदेशगतस्यैवाऽविद्यानिवृत्त्युपपत्तेर्गतिरप्युपपद्यते । यथा हि "तमेतं वेदानुवचनेन विविदिषन्ति" इति श्रुतेर्विद्योत्पत्तौ वर्णाश्रमधर्मशौचाचाराद्यपेक्षा प्रतीयते तथा "स एनान् ब्रह्म गमयति" इति श्रुतेरविद्यानिवृत्तौ विशिष्टदेशगत्यपेक्षा प्रतीयते । स एव विशिष्टो देशो यत्र विद्वांसमर्चिरादिगणो नयति ।

बादरेः सिद्धान्तमाह तृतीय इति यो वै परमात्मानमुपास्ते प्रत्यगात्मानं च प्रकृतिवियुक्ततया ब्रह्मात्मकतया चोपास्ते तमर्चिरादिगणो नयति । उक्ते पक्षद्वयेपि दोषोस्ति–प्रथमपक्षे तु "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" इति श्रुतेः प्रकोप एव दोषो यतोत्र परमात्मप्राप्तिरेवाभिधीयते न तु हिरण्यगर्भप्राप्तिः । परमात्मोपासकानेव नयतीति द्वितीयपक्षे तु "तद् य इत्थं विदुर्ये चेमेरण्ये श्रद्धा तप इत्युपासते तेर्चिषमभिसंभवन्ति" इति श्रुतिप्रकोप एव दोषो यतोत्र पञ्चाग्निविद्यानिष्ठस्य तत्र गतिरभिधीयते पञ्चाग्निविद्या च प्रत्यगात्मन एवोपासना । "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति तत्क्रतुन्यायात् प्रकृतिवियुक्तप्रत्यगात्मोपासनं युक्तं, तथोपासनयैव तथाप्राप्तिसंभवादन्यथा शुद्धस्वात्मस्वरूपप्राप्तिर्न भविष्यति । तत्र=उभयविधोपासकान्नयत्यर्चिरादिको गण इति पक्षं श्रुतिसंमतो नियमो विज्ञेय. स चोक्तः ॥

॥ इति पञ्चदशः पादः समाप्तः ॥